# श्रीमद्भागवते धर्मशास्त्रीय-तत्त्वानामनुशीलनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच्०डी०) इत्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः

2002




निर्देशक :
डॉ० व्यासमिश्रः
विभागाध्यक्षः
धर्मशास्त्रविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी।

अनुसंधाता
रामकृष्णदासवैष्णवः
पं०सं० २४०९/४०१०
दिनांक: ०५/०१/१९९९

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी - 2

# श्रीमद्भागवते धर्मशास्त्रीय-तत्त्वानामनुशीलनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच्०डी०) इत्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः

2002





निर्देशक :
डॉ० व्यासमिश्रः
विभागाध्यक्षः
धर्मशास्त्रविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी।

अनुसंधाता
रामकृष्णदासवैष्णवः
पं०सं० २४०९/४०१०
दिनांकः ०५/०१/१९९९



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी - 2

# निर्देशकस्य प्रमाण-पत्रम्

मदीयान्तेवासिना श्रीरामकृष्णदासवैष्णवः इत्यभिधानेनानुसन्धात्रा "श्रीमद्भागवते धर्मशास्त्रीयतत्त्वानामनुशीलनम्" इति विषयं मन्निर्देशनेऽनुसन्धाय शोधप्रबन्धोऽयं प्रस्तुतः। प्रबन्धेऽस्मिन् छात्रेण नूतनया विषयप्रतिपादनशैल्या नूतनविषयान् उपस्थाप्य प्रबन्धस्यास्य स्वोपज्ञता प्रमाणिता।

अतः परीक्षणार्हमेनं परीक्षणार्थं संस्तौति -

निर्देशकः

(डॉ० व्यासमिश्रः)
विभागाध्यक्षः
धर्मशास्त्रविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी।

# विषय-सूची:

# आभारप्रदर्शनम्

पूज्यपादानां प्रातःस्मरणीयानां १०१०८ श्रीविभूषितानामस्माकं गुरुवर्याणां श्रीरामगोविन्ददासमहोदयानां गुनामण्डलान्तर्गतमल्हारगढ़स्थ श्रीलक्ष्मीनारायणमन्दिरे महन्तपदभाजां कृपयैव "श्रीमद्भागवते धर्मशास्त्रीयतत्त्वानामनुशीलनम्" नामकस्य मदीयशोधप्रबन्धस्य पूर्ति र्जातेति विचार्य शोधप्रबन्धमिदं तेषामेव पादपाथोजयोः समर्प्य वयं महतीं शान्तिमनुभवामः।

महामहिमभाजां मध्यप्रदेशस्य इन्दौरनगरे बर्फानीधामाधिष्ठातॄणां ११०८ श्रीविभूषितांनां श्री बर्फानीबाबामहोदयानां शुभाशीर्वादेन च मदीय कार्यपूर्तिर्जातेति स्मारं स्मारं तदीयपादपद्मयोरपि प्रणतिततिं वितरामः।

श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालये धर्मशास्त्रविभागाध्यक्षाणां विलिव.यस.सी., पी-एच्०डी० चक्रवर्त्युपाधिभाजां धर्मशास्त्राचार्याणां श्री पं० व्यासमिश्रमहोदयानां निर्देशकत्वेन तेषामसीमकृपयैवाऽस्मिन् दुरुहविषये "पांशुलभ्ये फले लोभादुद्बाहुर्वामन" इव वयं पारङ्गता अतस्तेषामपि पादपद्मे केवलं प्रणतिं कर्तुं शक्नुमः।

वाराणये श्री जो०म०गोयनका संस्कृतमहाविद्यालयस्य प्राचार्यचराणां न्याय–साहित्य–पुराणेतिहासाचार्याणां साहित्यपौरोहित्यरत्नाद्यनेकोपाधि समलङ्कृतानां पी-एच्०डी० "विद्यावारिधिः" इत्युपाधिविभूषितानां आवाल्यादद्यावधि मद्गुरुणां

श्री पं० रमाकान्तपाण्डेयमहोदयानामुपकारं स्मारं स्मारमनृणी भवितुं ना वाञ्छामो वयम्। यतो हि समये समये वेद–पुराण–न्याय–साहित्यादिशास्त्रवचनै मामुदवोध्योद्‌बोध्य मदीयेऽस्मिन् शोधप्रबन्धे महत्साहाय्यमेभिः कृतम्। श्रीमतामेतेषां साहाय्यमुपलम्बैव स्वीय कार्ये साफल्यमुपलब्धमस्माभिरत एव न केवलं प्रणतिना अपि त्वेतेषा सौहार्दमयदयालुत्वेनैवानृण्यं भवितुं शक्नुमो नान्यथेत्यलभतिपल्लवितेन।

अनुसन्धाता:

रामकृष्णदास श्रीवैष्णव
१४/१२/२००२

(रामकृष्णदास श्रीवैष्णवः)

# भूमिका

क. विषयनिरूपणम्
ख. विषयोपयोगिता
ग. विषयविभागः

# भूमिका

## (क) विषयनिरूपणम्

अस्माकमस्मिन् शोधनिबन्धे निम्नाङ्किताः सन्ति विषयाः। **प्रथमाऽध्याये** प्रथमं धर्मपदार्थविवेचनम्। द्वितीयो धर्मभेदाः, तृतीयो धर्मोपयोगिता, तुरीयश्च श्रीमद्भागवतानुसारं धर्मफलम्।

**द्वितीयेऽध्याये** – प्रथमं वर्णधर्मः, द्वितीयो आश्रमधर्मः, तृतीयो यतिधर्मः, तुरीयश्च भागवत धर्मः।

**तृतीयेऽध्याये** – आपद्धर्मः प्रथमम्, द्वितीयो राजधर्मः, तृतीयः प्रजाधर्मः तुरीयश्च नारीधर्मः।

**चतुर्थेऽध्याये** – धर्मानुसारिणः श्रीमद्भागवतोक्ताः संस्काराः प्रथमम्, द्वितीयो शिक्षा, तृतीयो ब्रह्मचारिणो नियमास्तथातुरीयश्च सन्यासिनो नियमाः।

**पञ्चमेऽध्याये** – जीवानां फलम् प्रथमम्, द्वितीयः कर्मकाण्ड उपासनाविधिः, तृतीयश्च तत्त्वचिन्तनम्, सद्योमुक्तिः, जीवमुक्तिः, क्रमिकमुक्तिश्च।

**षष्ठेऽध्याये** – प्रथमं भक्तितत्त्वम्, द्वितीयो भक्तिधर्माः, तृतीयश्चोपसंहारः।

## (ख) विषयोपयोगिता –

यदि वेदा भारतीयसंस्कृतेः सर्वोच्चसमुद्गमं स्थानमस्ति, तर्हि पुराणानि सन्ति भारतीयसंस्कृतेः शाश्वतानि स्रोतांसि। हिन्दुजातिसंस्कृतिसम्बन्धिनः कदाचिदेव केचन एवम्विधा विषयाः सम्भवेयुः, येषु प्रकाशः पुराणैः न दत्तः स्यात्। वेदानन्तरं भारतीय–संस्कृतेर्वास्तविकं स्वरूपमस्माभिः पुराणैरेवाऽवगन्तुं शक्यते। पुराणानुसारं पुराणानि हि धार्मिक–सामाजिक–सांस्कृतिक–राजनीतिक–आर्थिकादिषु क्षेत्रेषु लोकवर्गस्य विचाराणां कार्याणां च यथार्थचित्रमुपस्थापयन्ति। पुराणामनुशीलनेनास्माभिः स्वजीवनोद्देश्यपूर्तये आदर्शमयः सदुपदेशो लभ्यते। यतो हि पुराणेष्वेकत्रैवाहिकाष्मिकहितसिद्धये उदाहरण–प्रत्युदाहरणकथानकोपकथानकद्वारा शुभकर्मणि प्रवृत्तयेऽशुभकर्मभ्यश्च निवृत्तये सदुपदेशो दत्तोऽस्ति यत् 'रामादिवत् प्रवर्तितव्यं न रावणादिवत्'। पुराणानुसारमस्माकं देशस्य नामाऽस्ति भारतवर्षम्। तथाऽत्र निवासिन्याः प्रजाया नामाऽस्ति भारती। पुराणेषु भारतवर्षस्य भौगोलिको विस्तारः समुद्राादुत्तरे हिमालयाच्च दक्षिणे प्रोक्तोऽस्ति।[१] तथा कन्याकुमारीतो हिमालये गङ्गाया उद्गमस्थानपर्यन्तं विस्तृतो भूभागो भारते सम्मिलितोऽभिमतोऽस्ति।[२] निरुक्तशास्त्रदृष्ट्या वायुमत्स्यपुराणयोर्भारतवर्षस्य निर्वचनं कृतमस्ति यत् प्रजानां भरण–पोषणकारणादेका संज्ञा भरत इत्यस्ति। एतन्निरुक्तेराधारेणायंदेशो भारतामित्युच्यते।[३]

---

१. *उत्तरं यत् समुद्रस्य हिमवद्दक्षिणं च यत्।*
*वर्षं तद् भारतं नाम यत्रेयं भारती प्रजा।।* — वायुपुराणे ४५/७५

२. *आयतोप्याकुमारीक्यादागङ्गा प्रभवाच्च वै।*
*तिर्यगुत्तर विस्तीर्णः सहस्राणि न नैव तु।।* — वायुपुराणे ४५/८

३. *भरणाच्च प्रजानां वै मनुर्भरत उच्यते।*
*निरुक्तेन व नाच्चैव वर्षं तद्भारतं स्मृतम्।।* — वायुपुराणे ४५/७६

इदमस्य रहस्यं भरणपोषणात्मकेन गुणेन मनुर्भरतः प्रोक्तोऽस्ति, तथा यत्र भूभागो मनुपद्धत्यनुसारं तत्सन्ततयो निवसन्ति, तन्नाम भारतमिति जातम्। यद्वा राज्ञो ऋषभदेव–तनयस्य भरतस्य नाम्नाऽयं देशो भारतमित्युच्यते[1] अथवा दौष्यन्तेर्भरतस्य (सर्वदमनस्य) नाम्नाऽस्माकं देशो भारतमिति निगद्यते।[2]

पुराणेतिहासयोर्यभारतवर्षस्य वन्दना विद्यन्ते, तासु महाभारतस्य भीष्मपर्वणि भारतवन्दना भावदृष्ट्या अत्यन्तमुत्कृष्टाऽस्ति।[3] पद्येषु येषां चक्रवर्तिनां राज्ञां नामानि गणितानि सन्ति, तेषां धार्मिको भावः प्रजावात्सल्यम्, सत्यपालनम्, परोपकारमयं जीवनम्, निरन्तरं लोककल्याणकामना, तैः स्थापिता आदर्शमयी व्यवस्था च, भारतीयगौरवस्यास्ति विषयः। वृत्तान्तोपस्थापनं पुराणेतिहासयोरनिवार्यं जायते। एतदनुसारेण तत्र तेषां चरित्रचित्रणं कृतमस्ति। पुराणेषु भारतवर्षं स्वर्गादप्युत्कृष्टं वर्णितमस्ति। तत्र सिद्धान्तितं वर्तते यद् देवाः स्वर्गे गीतं गायन्ति यत्ते मानवाः सन्ति धन्यतमा ये भारते

---

१. *हिमाह्वयं तु यद् वर्षं नाभेरासीन्महात्मनः*
*तस्यर्षभोऽभवत् पुत्रो मेरुदेव्यां महाद्युतिः।*
*ऋषभाद्भरतोजज्ञे वीर पुत्रशताग्रजः*
*तस्मै तद्दत्तवान् तस्मात्तन्नाम्ना भारते स्मृतम्।।*

*— कूर्मपुराणे ४०/३७—३८*

२. *चक्रवर्ती ततो जज्ञे दौष्यन्तिर्नृपसत्तमः।*
*शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्।।*

*— वायुपुराणे ९९/१३३*

३. *प्रियमिन्द्रस्य देवस्य मनोर्वैवतस्य च*
*पृथोऽस्तु राजन् वैन्यस्य तथेक्ष्वाको र्महात्मनः।*
*अन्येषां च महाराज! क्षत्रियाणां वलीयसाम्।*
*सर्वेषामेव राजेन्द्र! प्रियं भारत! भारतम्।।*

*— महाभारतभीष्मपर्वे ९/५.९*

जन्म गृह्णन्ति। भारतवसुन्धरा हि स्वर्गादप्युत्कृष्टाऽस्ति। यतो हि तत्रत्या जनाः स्वर्ग मोक्षं चोभयं लब्धुं शक्नुवन्ति। ये स्वर्गे भुक्तदेवत्वभोगास्ते मोक्षाय भूयो भारते जन्म गृह्णन्ति। सुरत्वं प्राप्तानस्मानुपेक्ष्याधिकं सुकृतिनस्ते। अतो भारतवर्षे जन्मग्रहणं नास्ति साधारणस्य पुण्यस्य फलम्।[1]

अपि च जम्बूद्वीपे वर्तमानेभ्योऽन्यवर्षेभ्यो भारतवर्षं सर्वश्रेष्ठं ज्येष्ठं चाभिमतम्, यतो हि अन्यानि वर्षाणि केवलं भोगस्थानानि सन्ति, किन्तु भारतं कर्मभूमिः प्रोक्ताऽस्ति। तत्र सत्कर्मानुष्ठानद्वारा मानवो योगं मोक्षं चोभयमपि लब्धुं शक्नुयात्। तथाहि विष्णुपुराणे, इदमस्य रहस्यम् भारतभूरेव सदसत्कर्मानुष्ठानयोग्याभूमिः। भारतादन्या भूमयो हि सुखदुःखसाक्षात्काररुपस्य भोगस्य स्थानानि। अत्रैवानुष्ठितेन विहितकर्मणाधर्मः, निषिद्धेन च कर्मणाऽधर्मो जायते। ताभ्यां च यथाक्रमं सुखदुःखे तद्भोगाश्च जायन्ते, नत्वन्यत्र समनुष्ठितेन कर्मणा तथेति भावः।

यदा च काचिज्जातिः परस्परविद्वेषवशात् स्वकीयमादर्शमयं चरित्रं विस्मृत्यात्मनः स्वरुपं परित्यजति, अन्याधीना च भवति तदा विश्वस्य इतरजातयः तस्या उपेक्षणं कर्तुं प्रारभन्ते। तद्धार्मिकाः ग्रन्थाः पोपकल्पना, तत्पूर्वजा असभ्याः, तद्भाषा अव्यवहार्या, तद्वेषभूषादिकं लज्जाजनकं, तदाचार—विचार—व्यवहारादिकं च वालानां क्रीडनकम्, इत्याद्युक्त्वा तां जातिं सर्वथाऽयोग्यामुद्घोष्टुं चेष्टन्ते। एतन्नैसर्गिक नियमानुसारं विविधा

---

१. गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात्।। — विष्णुपुराणे २/३/२४

जातयोऽन्येषां कुचक्रे समागत्य स्वकं स्वरुपं परिहरन्ति। तासामस्तित्वं केवलमितिहास–पृष्टेष्वेवाङ्कितमवतिष्ठते।

विश्वस्येतिहासोऽस्ति साक्षी यद् हिन्दुजातिः विश्वस्मिन् सर्वतः प्राचीनतमा। अस्याः पवित्रतमाभ्युद्देश्यानि सन्ति, स्वधर्माचरणम्, परोपकारकरणम्, स्वार्थत्यागः, ईश्वरं प्रति अनन्यप्रेमप्रतिष्ठापनम्, समस्तविश्वं विष्णुमयं मत्वा तत्र श्रद्धाऽऽचरणञ्च। अतस्तत्र विश्वबन्धुत्वभावनया "वसुधैव कुटुम्बकम्" इति पुनीतो भावः सर्वदा तिष्ठति। या हिन्दु जातिः प्रारम्भतः अन्यासु जातिषु शासनं करोतिस्म, सैव दैववशाद् अन्याधीना भूत्वा शासिता शोषिता चाभवत्। सर्वप्रथमं हिन्दुजातौ बौद्धानां शासनमजायत्, ततो यवनानामाक्रमणमभूत्। अनयोः शासनाधीनयाऽपि हिन्दुजात्या शिक्षापद्धतिः स्वाधीनैव रक्षिता। एतत् परिणामस्वरुपेण कुमारिलभट्ट–स्वामिशङ्कराचार्यसदृशा अद्भुतप्रतिभाशालिनो मनीषिणोऽस्यां जातावुत्पद्य बौद्धसाम्राज्यं समूलमुन्मूल्य बौद्धान् भारताद्बहिः कृतवन्तः। यवनशासनकालेऽपि शिक्षापद्धतिः हिन्दुनामधीनैव सुरक्षिताऽवर्तत। येनाऽनेके धर्मवीराः हिन्दवः स्वजातेर्धर्मस्य च संरक्षणे कृतसङ्कल्पा आसन्। महाराणाप्रताप–छत्रपतिशिवाजी–गुरुगोविन्दसिंह–हकीकतरायप्रभृतिभिर्महापुरुषैश्छिन्ना–भिन्ना वा हिन्दुजाति प्रणाशात् संरक्षिताः राजस्थानीयाभिः पद्मिनीप्रभृतिभिः सतीनारीभिश्च जौहरव्रतं स्वीकृत्य प्रज्वलितेऽग्नौ स्वानि शरीराणि भस्मसाकृत्वा भारतीयकुलयोषितामादर्शभूतः पातिव्रत्यधर्मः परिरक्षितः। परिणामस्वरुपे यवनराज्यस्य सत्ता शिथिला जाता। अस्मिन्नेवाऽवसरेयोरपनिवासिन्या आंग्लजातेर्भारतवर्षे प्रवेशोऽभवत्। शनैः शनैः शासनस्याधिकारः तस्या हस्तगतो जातः।

तत्प्रमुखेन शासकेन लार्ड मेकालेमहोदयेन यदा दृष्टं यद् भारतीयाः पाश्चात्यानुपेक्षन्ते घृणादृष्ट्या च तान्पश्यन्ति, तदा तेन शिक्षापद्धतिं स्वाधिकारे कृत्वा एवंविधानि पाठ्यपुस्तकानि निर्मापितानि, यान्यधीत्य हिन्दुजातिः स्वं वास्तविकमितिहासं विस्मृत्यांग्लजात्या सह सम्मिलिता स्यात्। तेषु पुस्तकेषु स्थले-स्थलेऽङ्कितमासीद् यदार्या न सन्ति भारतस्यादिवासिनः, किन्तु मध्य एशियातस्तत्रत्यानां दलद्वयं प्रचलितम्। तत्रैकं दलं युरोपाभिमुखं प्रस्थितं द्वितीयं च दलं भारते समागत्य न्यवसत्। अतो योरपवासिनी आंग्लजातिस्तथा भारतनिवासिनी हिन्दुजातिश्च द्वे अपि एकस्य पितुः स्तः सन्तत्यौ उभयत्र भेदभावोऽनुचितः। प्रथमं ये आर्या भारते आगतास्ते विद्याविहीना, गुणहीनाः, असभ्या, आरण्यका इव महामूर्खाः कृषकाश्चासन्। ते कृषिं कर्तुं जानन्तिस्म, पशून् पालयन्तिस्म, गोचारणसमये यानि गीतानि गायन्ति स्म, तानि एकत्र संगृह्य वेदनाम्ना व्यवहर्तुं प्रारभन्। अतो न वेदः कस्यचन महत्त्वस्य पुस्तकमस्ति, आर्याणां संस्कृतभाषा, मृतभाषाऽस्ति, हिन्दी चाल्पसंख्यकानां भाषा वर्तते, हिन्दूनां वेषभूषादिकं घृणास्पदं तथा तेषां भोजनं बलहीनं विद्यते, एषां व्यवहारो लोकविरुद्धः आचार-विचाराश्चासभ्यानां चिह्नानि सन्ति, इत्यादि इत्यादि।

पाश्चात्यैरनुभवः कृतो यद् भारतवर्षे यावद् विधिवद् वेदपाठो भविष्यति, तथा पुराणानां प्रवचनं चलिष्यति तावद् हिन्दुधर्मस्य हिन्दुजातेः हिन्दुसंस्कृतेश्च न कापि क्षतिर्भविष्यति। एवमनुभवं लक्ष्यीकृत्य तै लेंखिनी गृहीता अनेकानि पुस्तकानि च

रचितानि; येषु पुराणानामसत्यतां तत्कथासु परस्परं विरूद्धतां, असभ्यतां, अदूरदर्शितां, मूर्खतां च साधयितुं महती कुचेष्टा कृता यानि पठित्वा अभिनवशिक्षितवर्गसाधारणजनता च व्यामोहिता सती पुराणानि उपेक्षितवती। एवंविधाया दूषितशिक्षापद्धतिदृष्टेः परिणामोऽभवत् यद् आंग्लशिक्षितसमुदायस्य मानसिक स्तर एव परिवर्तितः। आंग्लशिक्षादीक्षिताः स्वान् भारतीयान् कथयितुं संकोचं तथा आंग्लानामनुकरणे गौरवं चानुभवन्। एवंविधां शिक्षामनुभूय लार्ड मैकालेमहोदय आत्मानं कृतकृत्यं मत्वा महत्या प्रसन्नतया स्वपितुः पार्श्वे एवमाशयमेकं पत्रं व्यलिखत् – तात्! ये हिन्दवः आंग्लशिक्षां प्राप्नुवन्ति, ते स्वधर्मान्नसहानुभूतिं कुर्वन्ति। कियन्तस्तु नास्तिका भवन्ति, केचन च खीष्टधर्मं मन्तुं प्रवर्तन्ते। अहमेकं वर्गमेवं विधं निर्मातुमिच्छामि, योऽस्माकं तेषां च मध्येऽनुवादकार्यं कर्तुं शक्नुयात्। वर्गोऽयं रक्त–रङ्गयोर्भारतीयो भविष्यति, परन्तु विचारेषु नूनमांग्लवद् भविष्यतीति।[1]

---

1. Macauley's Letters to his father.

*No Hindu who has received education ever remains Sincerly attached to his religion. Some contiune to profess it as a matter of policy, but others profess them selves Pure atheist and some embrace christianity. We desire to form a class who may be interpretors between us and the millions we govern, a class of Persons Indian in blood and colour, but English in taste, in opinion, in morals and in intelled.*

- (Puranavarma).

अनया लार्डमेकाले विषाक्तशिक्षया शिक्षितसमुदायो हिन्दुधर्म–हिन्दुसंस्कृति–हिन्दुजातीनां प्रबलः शत्रुरभवत् तथा स्वमतीतं गौरवं विस्मृत्य अवतारवाद–वर्णाश्रम–व्यवस्था–मूर्तिपूजन–मृतश्राद्धादीन् वैदिकपौराणिकविषयान् खण्डयितुं प्रवृत्तः। अस्या अभिनवशिक्षाया भारतीयेषु विद्यार्थिषु महान् कुप्रभावो जातः। अवरङ्गजेबप्रभृतिभिर्यवनै–र्यावती हानिर्नाजायत, तावती हानिरनया शिक्षया शिक्षितैर्हिन्दुनामधारिभिर्जाता।

कस्या अपि जातेरुत्थानं पतनञ्च तज्जातीयसाहित्येऽवलम्बितं भवति। यस्या जातेः स्वधार्मिकसाहित्यतो घृणा जायते, तस्याः पतनमनिवार्यतया भवति। इयमेव दशाऽद्यत्वे हिन्दुजातेरुपस्थिताऽस्ति। साम्प्रतमस्या जातेर्विश्वासो निजधार्मिकग्रन्थेभ्यो विच्छिद्यते। आंग्लानां यवनानाञ्च स्वधार्मिकग्रन्थेषु यावान् विश्वासो वर्द्धते, तातती एव हिन्दुजातिः स्वधार्मिकग्रन्थानामध्ययनाद् विमुखा भवति। एतस्य मुख्यं कारणमस्ति धार्मिकशिक्षाया प्रचार–प्रसारयोरभाव एव।

यस्यां शिक्षायां धर्मस्य न भवति स्पर्शः, तथा शिक्षया युवकेषु युवतीषु च सद्गुणानां प्रादुर्भावस्य स्वप्नदर्शनवदुपहासास्पदातिरिक्तंकिमपि न सम्भवति। सुशिक्षाद्वारैव विवेकशिलाया बुद्धेर्विकाशो भवति, ज्ञानस्य वृद्धिर्जायते, कर्त्तव्यपालनस्य रुचिरुत्पद्यते, ईश्वरीयाऽलौकिकशक्तिषु विश्वासः सम्भवति, महत्सु सम्मानभावो जागर्ति, सद्गुणार्जने उत्साहो वर्द्धते, स्वधर्मपालने प्रवृत्तिर्भवति, मानवः सत्कर्मसु सदा प्रवर्तते यथा दुष्कर्मणो निवर्तते, स्वदेशगौरवरक्षणे च तत्परो भवति।

विश्वस्मिन् प्रत्येकदेशस्यकृते स्वसाहित्यस्याऽऽवश्यकता भवति, यतोहि साहित्यमेव सभ्यता–संस्कृत्योः परिचायकं भवति। यस्य देशस्य सभ्यतासंस्कृत्यौ यावत्यौ समुन्नतिशिखरारुढे भवतः, तस्य साहित्यं तावदेव समुन्नतिशीलं भवति। हिन्दूनां संस्कृतसाहित्येन समं समृद्धं विकाशशीलं च साहित्यं विश्वस्य कस्या अपि जातेः सविधे नास्ति। यदि भाषा–भाव–दर्शन–आचार–विचार–रीति–नीति–शिल्प–कला–पुरावृत्त–विविधज्ञान–विज्ञानादीनि एकत्र द्रष्टुं समीहा स्यात्तर्हि संस्कृतसाहित्यस्य वेद–स्मृति–पुराणानि द्रष्ट्व्यानि, यतो हि सन्त्येतानि एषामागाराणि। समेषु तेषु चतुर्णां वर्णानामाश्रमाणाञ्च रीति–नीति–आचारविचारादीनां विस्तृतस्तर्कपूर्णश्चोल्लेखो विद्यते। पुराणद्वारा प्राचीनेतिवृत्त–सृष्टि–प्रलय–वंश–वंशावली–युग–मन्वन्तर–कल्पादीनां सम्यग् ज्ञानमुपजायते तथा पुराणानामाख्यानोपाख्यानगाथाभिः वेदानां वास्तविकोऽर्थोऽवगन्तुं शक्यते। पुराणैः स्वपूर्वजानां निर्मलो विचारो ज्ञायते, तथा पुराणानामनुशीलनेनैव विभिन्न जातीनामुत्पत्तिः, समस्तस्य विश्वस्य भिन्न–भिन्न नियमाश्च ज्ञायन्ते। पुराणज्ञानं विना संसारोऽन्धकारमयो भवति। उपासनाया भण्डारम्, मुक्तेर्द्वारम्, ज्ञानस्याकारः, भक्तेः साधनम्, कर्मणां प्रदीपश्च पुराणमेवास्ति। भगवदवतारवैशिष्ट्यं वर्णयन्त्यः पुराणानां गाथा जीवमीश्वरशरणे समुपस्थापयितुमत्यन्तमुपयोगिन्यः सन्ति। किमधिकं वक्तव्यम्, ये ये विषया अन्वेष्टुमिष्टाः स्युस्ते सर्वेऽपि पुराणेषु प्राप्तुं शक्यन्ते। महाभारतसम्बन्धे भगवता व्यासेन तु स्पष्टमुद्घोषितमस्ति यद् ये हि विषया महाभारते वर्णिताः सन्ति, त एव सर्वत्र विवेचिता विद्यन्ते, यश्चात्र विषयो न विवेचितोऽस्ति स कुत्राप्यन्यत्र न

दृश्यते।[1] तदनुसारं राजवंशानां गणतान्त्रिकप्रणालीतः साम्विधानिकसुव्यवस्थितमुदार—कल्याणकारिशासनव्यवस्थायाः सङ्केतोऽपि मिलति। ईशापूर्वं षष्ठशंताब्दीतः प्रागपि भारते राजनीतिकविचारधारा प्राप्यते। बुद्धसमये गणतान्त्रिकसाम्राज्यवादिन्यौ राजनीतिकपृष्टतो समानान्तरे प्रचलिते आस्ताम्। राजसंस्थायाः सम्बन्धे महाभारतस्य शान्तिपर्वणि प्रोक्तमस्ति यत् समस्तस्य जीवलोकस्याधारो राजधर्मोऽस्ति यतो योग—क्षेम—सुवृष्टि—व्याधि—मरण—भयानि राजन्येवाऽवलम्वितानि भवन्ति।[2]

तत्रैव पुनरुद्योगपर्वणि शान्तिप्रयासाय दूतभूत श्रीकृष्णद्वारा युधिष्ठिरं सन्दिशन्त्या कुन्त्या वचनं यथा वत्स! कालो राज्ञः कारणं भवति, आहोस्वित् राजा कालस्य कारणं भवति, इत्यत्र त्वया सन्देहो न विधेयः, वस्तुतो राजैव कालस्य कारणमस्ति।[3]

---

१. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ!।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।।

—स्व०प० ५/५०

२. राजमूला महाभाग! योग—क्षेम—सुवृष्टयः।
प्रजासु व्याधयश्चैव मरणं च भयानि च।।

—महाभारते शान्तिपर्वणि

३. कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति ते संशयो मा भूद्राजा कालस्य कारणम्।।

—महाभारते उद्योगपर्वणि।

राजा हि सत्ययुग—त्रेता—द्वापर—कलियुगानां स्रष्टाऽस्ति, तस्मात् सत्कर्मद्वारा त्वया सत्ययुगमुपस्थाय स्वर्गप्राप्तिर्विधेयेति मम निश्चिता मतिरस्ति।

महान्तोऽपि वैज्ञानिका भूगर्भविद्याविशारदा विद्वांसोऽकथेन परिश्रमेण असंख्यं द्रव्यराशिं व्ययीकृत्वाऽपि यदन्वेषणं कर्तुं न पारयन्ति, तानि पुराणानि अनायासेनैवोपदिशन्ति। पुराणानां विभिन्नेषु प्रसङ्गेषु यानि तीर्थ—पीठ—क्षेत्र—वन—पर्वत—नद—नदी—सरोवराणां विवरणानि प्रदत्तानि सन्ति, तैरनुसन्धानकर्तॄणां महत् साहाय्यमवाप्यते।

न केवलं कविकुलकलाधरकालिदास—भास—माघ—भारवि—भवभूति—श्रीहर्ष—प्रभृतिर्भिर्भारतीयैकविभिरेव विभिन्नानि पुराणानि स्वस्वमहाकाव्याधारीकृतानि प्रत्युत — टालस्टाय—होमर—मिल्टन—शेक्शपीयरप्रभृतीनां पाश्चात्यलेखकानां ग्रन्थाऽवलोकनेन स्पष्टं प्रतीयते यत्तैरपि यत्र—तत्र पौराणिकैराख्यानकैः स्वग्रन्थानां सज्जीकरणे न सङ्कोचः कृतोऽस्ति। एवं निःसंशयं वक्तुं शक्यते यद् विश्ववाङ्मये पुराणानामप्रतिमं स्थानमस्ति। कालक्रमेणाद्यत्वे संस्कृतवाङ्मयस्य पठन—पाठनयोः ह्रासात् पुराणानुशीलन श्रवण—मनन—प्रचार—प्रसाराणामुत्तरोत्तरं ह्रासो जायते। यत्र “विद्यावतां भागवते परीक्षा” इत्यनुसारं पुराणं विद्वत्ताया निकषा अभिमताऽसीत्, तत्र तदेव संस्कृतज्ञानशून्यानामल्पज्ञानामुपहासपात्रं जायते। अद्यत्वे विविधाभिः कुतर्कपूर्णाभिः व्यर्थशङ्काभिः पुराणानि व्यर्थी क्रियन्ते, परं पुराणं हि एका विशिष्टा विद्या वर्तते। पुराणविद्या हि गुरुमन्तरा नाऽवगन्तुं शक्या।

सद्‌गुरुद्वारा एषां शङ्कायाः समाधानं कर्तुं शक्यते तथा तेषां वास्तविकोऽर्थस्तद्रहस्यं चाऽवगन्तुं शक्यते, नान्यथा।

संस्कृतवाङ्मये पुराणानामेकं विशिष्टं स्थानमस्ति तथा तेषां महन्महत्त्वमपि विद्यते सर्वसाधारणजनेषु सभ्यता—संस्कृत्योः प्रचारः प्रसारश्च पुराणानां प्रधानं कार्यमस्ति। पाश्चात्या इतिहासवेत्तारोऽपि पुराणानि भारतीयानाममूल्यं निधिं मन्यन्ते। यद्यपि भारतीयसाहित्ये पुराणैः सहेतिहासस्यापि नाम समागच्छति, तथापीतिहासे तासामेव घटनानां वर्णनं विद्यते, या भूतले व्यतीताः, किन्तु पुराणानि भविष्यद् घटनानामपि सङ्केतं कुर्वन्ति। अतः पुराणानां विषयः इतिहासादपि अधिको व्यापको विस्तृतश्च विद्यते। वास्तविक इतिहासो न काव्यवत् कल्पनामाश्रयते, नवा स धर्मशास्त्रवदादर्शोन्मुखो भवति, किन्तु स तात्कालिकं यथार्थंचित्रमुपस्थापयति। कस्या अपि मानवजातेरितिहासः तदैव पूर्णो भवितुमर्हति, यदा तस्य कथानकं सृष्टेरारम्भतः क्रमबद्धरुपेण लिखितं स्यात्। इदं हि रुपं पुराणेषु पूर्णतया प्राप्यते। आधुनिकैरितिहासकारैरस्याः शैल्या उपेक्षा कृता, परन्तु इङ्गलैण्डस्य प्रसिद्धेन विचारशीलविदुषा एच.जी. विल्सनेन स्वकीयाया—मितिहासस्य रुपरेखायां पौराणिकप्रणाल्या एवाऽनुकरणं कृतमस्ति। तेन तत्र मानव—समाजस्येतिहासलेखनात् पूर्व सृष्टि प्रारम्भतो मनुष्यविकाशस्येतिहासोऽपि लिखितः। मानवजन्मग्रहणात् पूर्वं जीवः किं किं रूपं धत्ते तथा तस्य क्रमिको विकाशः कथं जायते, इत्यादेरपि मनोरमं विवेचनं कृतमस्ति। प्राचीनभारतस्यैतिह्यंपुराणेष्वेव निहितं

सुरक्षितञ्चास्ति। सौभाग्येनास्माकमधुनातना अपि केचनैतिह्यविदो भारतस्येतिहासनिर्माणे साम्प्रतं पाश्चात्यानां मुखापेक्षितां विहाय पुराणसाहाय्यं गृह्णन्ति। पुराणेषु विविधानां विषयाणां साकल्येनैकत्र समवायात्–. "श्रुतिस्मृत्युदिते नेत्रे पुराणं हृदयं स्मृतम्" इत्यनुसारं पुराणं हृदयं निगद्यते। एवं नेत्रं विना मानवो जीवितुं शक्नोति परं हृदयं विना न कोऽपि जीवितुं पारयति। अतः "आत्मा पुराणं वेदानामिति" स्कन्दपुराणीयवचनं सङ्गच्छते।

हिन्दुशास्त्रेषु वस्तुकथनस्य त्रयः प्रकाराः उक्ताः सन्ति – तथ्यकथनम्, रुपकथनम्, अतिशयोक्तिकथनं च। तत्र यद् वस्तु यादृशं स्यात्तस्य तादृगेव वर्णनं तथ्यकथनमस्ति। प्रकारोऽयं वैज्ञानिकानांकृते उपयोगी वर्तते। यत्र रुपकालङ्कारमाश्रित्य किञ्चिदुच्यते तद् रुपकथनमस्ति। प्रणालीयं प्रायः वेदेषूपलभ्यते। यथा – सूर्यकिरणेषूपलभ्यमानानि सप्तरङ्गानि अनूक्त्वाऽश्वानां रुपकं प्रदत्तमस्ति। पुराणेषु वस्तुवर्णनार्थमतिशयोक्त्य–लङ्कारस्याश्रयो गृहीतोऽस्ति। यथा – इन्द्रवृत्रासुरयुद्धे इन्द्रवृत्रासुरौ राजरुपेणाङ्कितौ स्तः। एवं वर्षावर्णनं त्रिषु साहित्येषु विशेषदृष्ट्या कृतमस्ति – ज्यौतिषविज्ञानं हि कस्मिन् नक्षत्रे कीदृग्वायुर्वहति, कथं च भवति तस्य विनाश इति तथ्येन विचारयति। दृष्टेरव–रोधकं तत्त्वमिन्द्रं वृष्टिकारकं मन्वानोऽनयोः तत्त्वयोरुत्पन्नं स धर्ममिन्द्रवृत्रद्वारा निरुपयति। पुराणसाहित्यं चातिशयोक्त्या इन्द्रं देवानां राजानं वृत्रं चासुराणामधिपतिमुक्त्वा देवासुरसंग्रामं वर्णयति। अतः पौराणिककथानां सम्बन्धे तदीयप्रणाल्यां ध्यानं दत्वा एव तदध्ययनं विधेयम्। मानवानां कल्याणार्थं स्वयं नारायणेन व्यासात्मना पृथिव्यामवतीर्य पुराणानि

रचितानि। वेदविज्ञानस्य मनोरञ्जकोपाख्यानरुपेणोपस्थानं पुराणानामस्ति अद्भुता विशेषता। पुराणानां पवित्रे प्राङ्गणे एकतो भक्तेर्भागीरथी प्रवहति, तर्हि अपरत्र विज्ञानस्य स्रोतो निःसरद् दृश्यते। वेदेषु यस्य सूचनामात्रमस्ति पुराणेषूपाख्यानादिद्वारा तस्यैव विस्तारोऽस्ति। वेदेषु यासामाभासमात्रमस्ति पुराणेषु सा एव कथा मनोरञ्जकरुपेण विस्तृताः सत्यः एकं नवीनं रुपं धृतवत्यः। यथा – "विष्णुर्विचक्रमे त्रेधा निदधे पदम्।" इतीदं ऋग्वेदीयं वामनोपाख्यानं वामनादिपुराणेषु त्रिविक्रमनामकस्य वामनावतारस्य प्रसङ्गे विस्तृतरुपेण वर्णितमस्ति। वस्तुतस्तु पुराणं विना वेदार्थोपवृंहणमेव न सम्भवति, यतो हि वेदेषु निर्दिष्टानामाख्यानानां व्याख्या पुराणेष्वेवोपलभ्यते। यथा – "अहल्यायै जारः" इत्यस्य तात्पर्यं पुराणवर्णितमिन्द्रकृतमहल्याघर्षणं विना न स्फुटतां प्रयाति। अत एव वाल्मीकिरामायणेऽग्निप्रभृतीन् देवान् प्रति स्वयमिन्द्रेणाभिहितम्।[१]

वेदा न सन्त्युपाख्यानमूलका ग्रन्थाः। तत्र तु स्थलविशेषे उदाहरणरुपेणोपाख्यानानि वर्णितानि सन्ति। परं पुराणेषूपाख्यानानामेकत्र समावेशोऽस्ति। अतः तत्रोपाख्यानबाहुल्यं विस्तारश्च दृश्यते। कस्याप्युपाख्यानस्य विस्तरतो वर्णनं वेदस्य नोद्देश्यं, किन्तु तत्रत्याऽत्यन्तसंक्षिप्ताः केनचिद् विशेषेणोद्देश्येन वर्णिता या कथाः सन्ति, ता एव पुराणेषु आख्यायिकारुपं धृतवत्यः। यतो हि साधारणेषु मनुष्येषु कौतुहलपूर्वकं भगवद्भक्त्युत्पादनमाख्यायिकानामस्ति मुख्यमुद्देश्यम्। वेदपुराणयोरिदमेवास्ति विशेषतो–

---

*१. कुर्वता तपसो विघ्नं गौतमस्य महात्मनः। क्रोधमुत्पाद्य तु मया सुरकार्यमिदं कृतम्।*

*– वा.रा.वा.का. ४९१*

ऽन्तरम्, यद्वेदस्याति संक्षिप्ता: प्रसङ्गा: पुराणेषु स्वतन्त्रतया समुपबृंहिता: सन्ति। अत एव वेदवत् पुराणानामपि प्रामाण्यमभिमतमस्ति, तथा तानि, असामान्यदृष्ट्या दृश्यन्ते श्रूयन्ते च। एतदतिरिक्तस्य वेदानुकूलस्य ज्ञानस्यकर्मण: उपासनायाश्च विवेचनमपि पुराणेषु स्पष्टतयोपलभ्यते। तेन समेषां भवति महानुपकार: तथा तै: पुराणै: धर्म–सम्बन्धिनां विविधा उपदेशा अपि प्राप्यन्ते।

अथ नास्ति कश्चन सन्देहलेशो यद् भारते भूयोभूय आक्रमणेन राज्यविप्लवै: अनेकविधपरिवर्तनेन च पुराणानां वास्तविकस्थितावद्यत्वे महदन्तरमुपस्थितमस्ति, न कियननयपि पुराणानि पूर्णानि मिलन्ति, कतिपयानि स्वसंख्ययाऽधिकानि रुपाणि अधारयन्, प्रक्षिप्तैरंशै: कियतां कलेवरमपि परिवर्तितम्, एकस्य पुराणस्य विषया: क्वचन अन्यपुराणेषु प्रविष्टा:। विदुषामनुमानमस्ति यत् सम्प्रदायवादिनां पारस्परिकेन संघर्षेण स्वसम्प्रदायेतरान् हीनतरान् बोधयितुं पश्चात् यत्र कुत्रचित् पुराणेषु प्रक्षिप्ता अंशा: मेलिता:। अस्तु – यदि केनचित् कारणेन पुराणेषु कुत्रचित् प्रक्षिप्ता अंशा: समागतास्तर्हि पुराणमात्रमप्रामाणिकं मन्तुं न युक्तमस्ति, यदि बहुमूल्येषु रत्नेषु कश्चन काचं मेलयेत्तर्हि किं तानि हेयानि जायन्ते? नहि कथमपि न सम्भवति तेषां रत्नानां हेयता, किन्तु नीरक्षीरविवेकिनो हंसा इव विचारशीला विद्वांस: सदसती विचारो हेयस्यांशस्य त्याग: उपादेयस्यांशस्य च ग्रहणमेव बुद्धिमत्तां मन्यन्ते। यदि विवेकपूर्वकं मनोयोगेन पुराणानि पठ्येरन् तर्हि प्रक्षिप्ता अंशा अवश्यं परिज्ञातुं शक्यन्ते। यत्र कुत्रापि भस्मरुद्राक्ष–

तिलक–तुलसीमालादीनां निन्दा तथा देवतानां परस्परं विरोधपरकानि वचनानि स्युस्तर्हि तानि सम्प्रदायवादिनां दुराग्रहिणां कुपुरुषाणां बुद्धेः परिणामस्वरूपाणि ज्ञेयानि। एतादृश्य अंशाः समन्वयवादिनो महर्षेर्व्यासस्य लेखनीतो न प्रसूता भवितुमर्हन्ति। तेषांस्तु सम्प्रदायवादस्य तरङ्गैः समुद्गता अवगन्तव्याः। भगवान् व्यासदेवस्तु समेषामैक्य–प्रतिपादयितास्ति। पुराणेषु विभिन्ना भक्ता भिन्न–भिन्नदेवतानामुपासका दृश्यन्ते; यतो हि हिन्दुशास्त्राणां विभिन्ना देवता एकस्यैव परब्रह्मणो रुपान्तराणि सन्ति, येषां केषामप्युपासनया स्वेष्टसिद्धिर्भवत्येवेति गीतायामपि भगवता श्रीकृष्णेन स्पष्टमुद्–घोषितमस्ति।[1]

प्रायो लोके दृश्यते यत् यो मनुष्यो येन साकं प्रेम प्रकुरुते, स वाञ्छति यद् मत्समः सर्वेऽपि अनेन सह प्रेम कुर्वन्तु नाम। एवं यो ऋषिः यस्या देवताया आराधने–नात्मनोऽभीष्टसिद्धिमकामयत्, तेन तस्या देवताया विशिष्टा भक्तिः कृता। तदनुगामिना शिष्यवर्गेणाऽपि तस्या एव देवताया उपासनाप्रचारो विहितः। तदनुसारमेव तद्देवतोपासनाया फलप्रतिपादकानामुपाख्यानामेकस्मिन्नेवपुराणे सङ्कलनं कर्तुं चेष्टाऽजायत्। एवं यो मानवो यस्या देवताया भक्तोऽस्ति, स स्वेष्टदेवतामाहात्म्यप्रकाशकमेवपुराणमाद्रियते। एतेनैव कारणेन प्राचीनान्युपाख्यानानि नैकरुपाणि प्राप्यन्ते। वेदमन्त्रेषु देवतानां स्तुतिमात्रं विद्यते।

---

*१. यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमर्हति।*
*तस्या तस्याचलां श्रद्धां तामेव विदधाम्यहम्।।*

*— श्रीमद्गीता ७/२१*

ब्राह्मणग्रन्थेषु यज्ञादीनां प्रसङ्गे यत्र तत्र कथानामपि संक्षेपतः उल्लेखो विद्यते, किन्तु विस्तरत एकत्र कथाख्यानोपाख्यानानां संग्रह आवश्यक आसीत्। एतत्पूर्तये एव महर्षिणा व्यासेन पुराणानि प्रणीतानि। संस्कृतवाङ्मयसिद्धान्तानुसारं मानवजीवनस्यास्तिप्रधानं लक्ष्यमाध्यात्मिकजीवनसमुन्नतिद्वारामोक्षप्राप्तिः। ज्ञानकर्मोपासनामाध्यमेन मानवमात्रस्य सुमार्गे नयनपूर्वकं मोक्षाधिकारित्वसम्पादनं पुराणानां रचनाया मुख्यमुद्देश्यमस्ति। विभिन्नेषु पुराणेषु भिन्न–भिन्नकल्पानां कथाः सन्ति। पौराणिककथासु कुत्रचिदस्ति साम्यं क्वचन वैषम्यमपि। तत्परिहारे विद्वांसः कल्पभेदमेवाश्रयन्ति।[1]

पुराण–रामायण–महाभारत–तन्त्रशास्त्राणि विश्वकोशकार्यं कुर्वन्ति। अद्यत्वेऽस्माकमुत्तरोत्तरमवनतेः कारणं सुशिक्षाया अभावोऽस्ति। शिक्षाया उद्देश्यं न केवलमुदरपूर्तिरिव मन्यते। अतोऽस्माकं धार्मिक–आर्थिक–सामाजिक–नैतिक–शारीरिक–मानसिक–वाचनिकाध्यात्मिको ह्रासः शनैः शनैः वर्द्धते। कस्यापि देशस्य धर्मस्य जातेश्चोन्नत्ति–मूलकारणं तत्रत्या शिक्षैवास्ति। अत आलोचकानां मतमस्ति, यत् कस्यापि देशस्य जातेश्च धार्मिक–आर्थिक–सामाजिकसमुन्नतिः द्रष्टुमिष्टा स्यात्तर्हि तदीयशिक्षाप्रणाल्या निरीक्षणं कर्त्तव्यम्। बालका एव देशस्य धर्मस्य जातेश्च सन्ति विभूतयः। तेषां यादृशं चरित्रं सञ्चितं भविष्यति तादृशमेव देशस्य धर्मस्य भविष्यमपि सञ्चितं भविष्यति। अतो बालकानां चरित्रसञ्चये विशेषतो ध्यानं प्रदाय तेभ्यो धार्मिकशिक्षाप्रदानस्य

---

*१. क्वचित् क्वचित् पुराणेषु विरोधो यदि दृश्यते।*
*कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते।।*

—महत्यावश्यकतास्ति। यवनखीष्टीयबालकानांकृते तु तत्संस्थासंस्थापितेषु शिक्षालयेषु प्रवर्तते तदीयधार्मिकशिक्षाप्रदानस्य व्यवस्था किन्तु हिन्दुबालकानां कृते धर्मनिरपेक्ष—सर्वकारद्वारासञ्चालितेषु शिक्षालयेषु धार्मिकशिक्षाप्रदानस्य वार्ता तु दूरे तिष्ठतु धार्मिकग्रन्थानां नामापि बालकै र्न ज्ञायते। परिणामेऽस्माकं बालका ध्रुव—प्रह्लाद—लव— कुश—भरत—अभिमन्युप्रभृतीनां वीरबालकानां स्वप्नमपि न पश्यन्ति। इदं हिन्दुजातेः ह्रासस्य कारणं न तर्हि किं सम्भवेत्?

भारतीयशिक्षाया उद्देश्यं न केवलं धनोपार्जनमात्रमेवास्ति, प्रत्युत धमार्थकामानां समानतया सेवनमनिवार्यमस्ति। अर्थात् त्रयाणां धर्मार्थकामानां समानरुपेण समादरो विधेयः। यो हि त्रिष्वेतेषु कस्मिंश्चिदेकस्मिन् व्यासज्जते स निकृष्टकोटिकः पुरुषो निगद्यते। यो द्वयोर्निरतो भवति, सोऽस्ति मध्यमकोटिको नरः। यश्च त्रिषु समानरुपेणप्रवर्तते स उत्तमकोटिको मानवो गण्यते।[1] एवं भारतीया धर्मदर्शनाभ्यां सहैव जीवनस्य भौतिकेष्वङ्गेष्वपि पर्याप्तां रुचिं दधतेस्म। तेषां पुरुषार्थेषु धर्ममोक्षातिरिक्तावर्थ—कामावप्यास्ताम्, याभ्यां जीवनस्य प्रवृत्तिमार्गे उचितं स्थानं प्राप्तमासीत्। यो हि धर्मप्राणा हिन्दुजातिरन्यजातिषु शिरोमणिः, मानवमणिः, आदिगुरुः, शिक्षिकाः, पथप्रदर्शिका आसीत्। अद्यत्वे तस्या एव बालका धर्महीनो अन्यानुकरणकुशला विस्मृतपूर्वजपुरुषार्था उच्छृङ्खलाचाराश्च भवन्ति

---

१. धर्मार्थकामाः सममेव सेव्या यो ह्येकसेव्यः स नरो जघन्यः।
द्वयोस्तु दाहयं प्रवदन्ति मध्यं स उत्तमो यो निरतस्त्रिवर्गे।।

—

निरन्तरमित्यहोदौर्भाग्यम्। यदि हिन्दुभिः निजबालकेभ्यः पूर्ववर्तिनां स्वनिर्भीकबालकानां कथानकमुपदिष्टं स्यात्तर्हि नैवं दशा सम्भवेत्। अद्यत्वे धार्मिकशिक्षाया अभावस्य परिणामो जायते, यदाधुनिकानां बालकानां हृदयपटलेषु हिन्दुसंस्कृते रुपरेखा न विकसिता भवति, येन ते स्वपूर्वजानां गौरवमनुकरणीयमादर्शञ्च सर्वथा विस्मृत्यानेकानर्थकरणे प्रवृत्ता भवन्ति, यदस्माकं धर्म–साहित्य–पूर्वपुरुषाणां वास्तविकं स्वरुपं कीदृगासीत्, किञ्चास्ति कर्त्तव्यमस्माकम्।

तात्पर्यमिदमस्ति यद् वाल्यावस्थायां धार्मिकशिक्षाया अभावादद्यतनीया अस्माकं बालका हिन्दुधर्म–साहित्य–सभ्यता–संस्कृति–सामाजिकविषयाणां किमपि किमपि न जानन्ति, किन्तु – पाश्चात्य–धर्म–रीति–नीति–व्यवहारादिविषयेऽत्यधिकाः प्रवीणाः जायन्ते। यस्य परिणामेऽस्माकं वैदिकधर्म–सदाचार–भारतीयनीति–रीति–विचार व्यवहारादयो बालकानां हृदयेभ्य उत्तरोत्तरं निःसरन्ति, प्रविशन्ति च वैदेशिका आचार–विचार–व्यवहारादयः। अद्यत्वेऽस्माकं बालकाः स्वकीय–स्वरूप–भाषा–भावादिग्रहणे संकुचन्ति, किन्तु विदेशीय भावना–भाषा–आचार–विचार–व्यवहारादीनामनुकरणे स्वकीयं गौरवमनुभवन्ति। यत्रास्माकं शिक्षाया आदर्शः "महाजनो येन गतः स पन्था" इत्यासीत्, तत्राद्यतनीया बालकाः स्वपूर्वजान् आरण्यकानसभ्यान् सङ्कीर्णविचारानुदारांश्च मन्यन्ते।

इतिहासनाम्नाऽस्माकं बालका यत् शिक्ष्यन्ते,किं तदेवास्ति वास्तविक इतिहासः? अद्यतनीये इतिहासे तु बालका शिक्ष्यन्ते यत् हिन्दुसभ्यता साहित्यं चार्वाचीनेस्तः।

हिन्दुपूर्वजा मध्यएशियातो भारतमाक्रम्यात्रत्यानामादिनिवासिनामार्याणां सर्वस्वं लुण्ठित–वन्तस्तथा तान् दूरेदक्षिणेऽपसारयन्। हिन्दुवो भारतस्यादि निवासिनो न सन्ति, किन्तु तेऽपि आङ्ग्लजातिवद् वाह्यप्रदेशादागता:। किं सर्वविधज्ञानभाण्डाराणां भारतीयेतिहासस्रोतसां वेदानां पुराणानामस्मत्पूर्वजानां च विषये असत्य–निर्मूल–भ्रमोत्पादक चर्चैवास्ति इतिहास:? नहि, कदापि नैतद् सम्भवति। कथनस्येदमस्ति तात्पर्यं यद् या जाति: स्वान् धर्मग्रन्थान् आत्मन: पूर्वजांश्च विस्मरति, तान् प्रतिदोषदृष्टिं वा कुरुते, सा न स्थायिनीं समुन्नतिं कर्तुं प्रभवति। अद्यतनशिक्षाया: प्रभावेण भारतीयानामियमेवास्ति दशा। पाश्चात्येन विचारकेण विदुषा मैक्समूलरेण सत्यमुक्तमस्ति –

या जाति: स्वकीयेन प्राचीनेन गौरवेण, इतिहासेन, साहित्येन च, नात्मानं गौरवान्वितं मनुते, सा स्वजातीयजीवनस्य प्रधानमाश्रयं समूलमुन्मूलयति।

वस्तुतोऽद्यत्वे शिक्षापद्धतावनेके दोषा: समागता: सन्ति, अनुशासनहीनता, दैनन्दिनं वर्द्धते। गुरुशिष्यसद्भावो दूरतरं गच्छति, कक्षावहिष्कारोऽहरह: क्रियते, कलहाग्निर्देदीप्यते, संघर्षस्फुलिङ्गा: सर्वत: प्रसरन्ति, अभिभावकानां गुरुणामन्तेवसतां चैकमात्रं ध्येय–मुपस्थितमस्ति, यद् बालका: परीक्षासु येन केनापि प्रकारेणावश्यमुत्तीर्णा: स्यु:। परीक्षाकेन्द्रेषु अवैधाश्रयणम्, परीक्षकाणां भर्त्सनम्, अनुचितेन विधिनाऽङ्कप्राप्तिप्रयास: समेषां लक्ष्यं जातमस्ति। प्रश्नकाठिन्ये कोलाहलकरणं, परीक्षाभवनत्याग: कर्त्तव्यत्वेनोपस्थित:, केन्द्रव्यवस्थापकानां हत्याया निरीक्षकेष्वघातस्य च कुचेष्टा: क्रियन्ते, कुलपतेर्विश्वविद्यालये

प्रवेशः कठिनो जातः, कार्यालयस्य कार्यस्थगनमारब्धम्। तत्राग्नि प्रज्वालनं, वस्तूनां त्रोटनं भेदनञ्च प्रायः सर्वत्रैव वोभवीति। यत्रेदृशः शिक्षायाः कुपरिणामो दृश्यते, तत्र का सदाशा क्रियेत। अतो वर्तमानशिक्षापद्धतावामूलं परिवर्तनमनिवार्यतया नितान्तमावश्यकं प्रतीयते। भारतहितेच्छुभिः समस्तैः शिक्षाविद्भिः सम्भूय भाविन्याः सन्ततेर्वास्तविकविकाश–शीलप्रकृतये सुशिक्षायाः प्रयासोऽवश्यं विधेयः। "यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्" इतिहितोपदेशवचनानुसारं वाल्ये या शिक्षा दीयते, तस्या एव संस्कारो दृढ़तरो जायते, जीवनपर्यन्तञ्च तथा लाभो भवति। अतो हि सुकोमलमतिभ्यो बालकेभ्यः किञ्चित् तदुपयोगिनीं पौराणिकीं शिक्षामवश्यं प्रदातुं प्रयतनीयम्। यथा सुशिक्षया ते धर्म–देश–जातीनां समुन्नतये प्रयत्नशीलाः सन्तः सुखमयं जीवनं निर्मातुं शक्नुयुः। अतस्तैः स्वप्राचीनेतिहासस्य परम्पराया वा ज्ञानमवश्यं कर्त्तव्यम्, येन भारतीयसभ्यतायाः संस्कृतेश्च पूर्णज्ञानवन्तोऽस्माकं बालका समाजस्य पथप्रदर्शकाः सन्तः स्वदेश–धर्मजातीनां सत्सेवका राष्ट्रहितेच्छवो वा भवेयुः। तथा स्वतन्त्रस्य भारतस्य गौरवरक्षणेन सह स्वं भविष्यं नूनं समुज्ज्वलमादर्शमयञ्च विदध्युः।

## (ग) विषयविभागः

अद्यत्वे भारतीयेतिवृत्तार्थं स्वतन्त्ररुपेण पुराणानां मान्यता समारब्धा। ऐतिहासिकसामग्र्यन्वेषणार्थं यत्र तत्र पुराणानां विशेषरुपेणाऽऽलोचनात्मकमध्ययनं प्रचलति। आधुनिका इतिहासकारा डॉ. विल्सन–रैप्सन–स्मिथ–पर्टिजर–कीथ–मैकडानल–

कप्तान—स्पीक—किर्फेल—जायसवाल—भाण्डारकर—रायचौधरी—प्रधान—दीक्षितार—आल्तेकर—रङ्गाचार्य—जयचन्द—डॉ. राजबलीपाण्डेय—डॉ. काणे—हरप्रसादशास्त्री— डॉ. आर.सी. पुसलकरप्रभृतयो विद्वांसः स्वकीयेषु ऐतिहासिकग्रन्थेषु समीक्षासु प्रबन्धेषु—लेखेषु च पौराणिकसामग्रीणां धर्मपदार्थ—धर्मभेद—धर्मोपयोगिता—वर्ण—धर्म—आश्रम—धर्म—यतिधर्म—भागवतधर्म—आपद्धर्म—राजधर्म—प्रजाधर्म—नारीधर्मधर्मानुसारि—श्रीमद्भागवतोक्त संस्कार—शिक्षा—ब्रह्मचारिनियम—संन्यासिनियम—जीव—फल—कर्मकाण्डोपासनाविधिः —तत्त्वचिन्तन—सद्योमुक्ति—जीवमुक्ति—क्रमिकमुक्ति—भक्तितत्त्व—भक्तिधर्माणाञ्च प्रचुरमुपयोगं कृतवन्तः कुर्वन्ति च। दीक्षितारेण पुराण—इन्डेक्शनामक एको विशालकायो ग्रन्थः त्रिषुभागेषु लिखितो वर्तते। या पुराणगवेषकेभ्यो विद्वद्भ्योऽत्यन्तमुपकारी विद्यते। डॉ. राजेन्द्रचन्द्रहाजरामहोदयेन पुराणसम्बन्धिनोऽनेके ग्रन्थाः प्रणीताः सन्ति प्रणीयन्ते च। तल्लिखितं "स्टडीज् इन पुराणिक रेकार्ड्स ऑफ हिन्दू राइट्स एण्ड कस्टम्स"नामकं पुस्तकं पौराणिकशोधनकार्यायात्यन्तं महत्त्वपूर्णं परमोपयोगि चास्ति। तस्य विस्तृतभूमिकासहितविष्णुपुराणस्यांग्रेजीसंस्करणं महदुपादेयं वर्तते। तथा डॉ. देवेन्द्रकुमारराजारामपाटिलद्वारानिबद्धः "कल्चरल हिस्टरी फ्राम दि वायुपुराण"नामा ग्रन्थः पौराणिकगवेषणात्मककार्यायातिशयोपयोगी सिद्धोऽस्ति। भारतीय संस्कृतेः सभ्यतायाश्च व्यापकेतिहासाय पौराणिकसाहित्यस्य महती उपयोगिता वर्तते। यतो हि पौराणिके वाङ्मये भूतत्त्व—भूगोल—खगोल—राजनीति—कलाविज्ञान—दर्शन—तत्त्वज्ञान—सम्विधान—धर्मार्थादीनां लोकोपयोगिनां शास्त्रीयविषयाणाञ्च साङ्गोपाङ्गविवरणं समुपलभ्यते।

पुराणानामैतिहासिकतासम्बन्धे वर्तमानगवेषकाणां धारणा समये–समये परिवर्तते एव। डॉ. पुसालकरस्य मते विद्यते यद् भारतीयेतिहाससंशोधनस्यारम्भिककाले पुराणानां किमपि ऐतिहासिकं मूल्यं नासीत्। यदा कैप्टेनस्पीकेन कुशद्वीपं (नुवियां) गत्वा नीलनद्या उद्गमस्थानमन्विष्टं येन पुराणानां वर्णनस्य समर्थनं जातम्, तदा शनैः शनैः पुराणेषु विदुषामास्था दृढ़ा जाता। किन्तु ताम्रपत्रमुद्रादिभिः ऐतिहासिकतथ्यान्वेषणस्य प्रवृत्त्या पौराणिकमूल्ये ह्रासो जातः। बौद्धग्रन्थेषु पौराणिकप्रतिपादनानां खण्डनं जातम्। एवं सन्देहवृद्ध्या पुराणेषु अविश्वास उत्पन्नः, किन्तु पाश्चात्यदेशीयेन विदुषा विल्सनेन पुराणानामध्ययनं कृत्वा विष्णुपुराणस्यांग्रेजी–अनुवादः प्रकाशितः, तत्र सारगर्भितां महतीं भूमिकां च लिखित्वा तत्र तुलनात्मिका टिप्पणी प्रदत्ता, येन संस्कृतसाहित्यस्य विशालेऽङ्के विदेशियानां विदुषामध्ययनमारब्धम्। यतः पुराणानामनुचितापेक्षायां अन्तो जातः, पुराणानि स्वतः प्रमाणयोग्यानि चाभिमतानि। परिणामस्वरुपे शिक्षितसमाजे पौराणिकोपयोगितायाः प्रवृत्तिर्दृष्टिगोचरी जाता। तस्य श्रेयो विल्सनमहोदयस्यैवास्ति। तदनन्तरं पुराणानां विशेषाध्ययनस्यारम्भः पार्जिटरेण कृतः। तस्य धैर्याऽध्यवसाययुक्तस्यानुसन्धानस्येदं फलमजायत् यत् पुराणानामैतिहासिकसामग्रीणां पर्यालोचनात्मकं विवरणं विश्वस्य समक्षे समुपस्थितम्। पुराणेषु यदैतिहासिकं विवरणं विद्यते तस्य पक्षोऽनेन पुष्टो जातः। स्मिथेन प्रमाणितं यन् मत्स्यपुराणे आन्ध्राणां वर्णनं प्रायो यथार्थं विद्यते। इतिहासज्ञा अपि विद्वांसोऽद्यत्वे मन्यन्ते यदान्ध्राणां राज्ञां विषये मत्स्यपुराणस्य, मौर्याणां विषये विष्णुपुराणस्य, गुप्तानां सम्बन्धेन वायुपुराणस्य वर्णनं सर्वथा विश्वसनीयं वर्तते।[1]

---

१. संस्कृतिः पृष्ट ५५७

वैदिकवाङ्मये समुपलब्धं पुराणं आधुनिकानि समुपलब्धानि अष्टादशपुराणान्येव सन्ति, आहोस्वित् तदितरदिति संशये कैश्चिपुराणशब्दस्यैकवचनान्तप्रयोगदर्शनादनुमीयते यत् प्राचीनकाले साधारणरुपेण पुराणमेकमेवासीत्। पुराणकारेणापि अथर्ववेदे पुराणं यजुषा सहेति एकवचनान्तपुराणशब्दस्य प्रयोगात् पूर्वमेकमेव पुराणमासीदिति मतं सोपष्टम्भमुपस्थापितम्। जैक्सनप्रभृतिभिरपि एतदेव मतं समर्थितम्, किन्तु विवेचका विद्वांस: पुराणशब्दस्यैकवचनान्तं प्रयोगं जातिपरकं मत्वा तद्वहुत्वबोधकं मन्यन्ते। यथा ब्राह्मणो न हन्तव्य इत्यत्र ब्राह्मणशब्दो जातिपरकत्वात् समस्तानां ब्राह्मणानां ज्ञापकोऽस्ति, तथैव पुराणशब्दस्यैकवचनान्तप्रयोगोऽपि अनेकपुराणानां वाचकोऽस्ति।

अत्र तु सन्देहो नास्ति यन्मूलपौराणिकोंऽशोऽतिप्राचीनोऽस्ति, किन्तु अद्यत्वे समुपलबधानि पुराणानि रचनादृष्ट्या भाषाया आधारेण च तादृशानि प्राचीनानि न सन्ति। विषयदृष्ट्या पुराणानामधिकांशरुपमर्वाचीनमवश्यमस्ति, परन्तु पाश्चात्य विपश्चितो यावदर्वाचीनत्वं पुराणानां मन्यन्ते, न तावदाधुनिकानि सन्ति। येन रुपेण वैदिकसाहित्येपुराणानां चर्चास्ति, तेषां समावेश आधुनिकेषु पुराणेषु जातोऽस्ति तथा कालक्रमान् नवोदितशास्त्राण्यपि तद्विशाले कोशागारे समाविष्टानि जातानि। डॉ. राजबलीपाण्डेयस्यास्ति सम्भावना यद् यदा महाभारतकाले वैदिकसंहितासमानं पौराणिकसाहित्यस्यसंगठनं प्रारब्धं तदैव वेदव्यासेन पुराणानि रचितानि। पुराणेषु स्वविस्तारस्यानन्ताशक्तिरस्ति। अत: प्रत्येकनवागतयुगेषु तत्राभिनवा: सामग्र्य: प्रक्षिप्तपा जाता:। अनेन न केवलं पुराणेषु कथाभागेषु वृद्धिर्जाता,

अपि तु विषयदृष्ट्यापि तेषु नूतनविषयाणां समावेशो जातः। देशे यावन्ति ज्ञानस्रोतांसि आसन् तानि समस्तानि यथासम्भवमात्मसात्कृत्वा पुराणैर्विशालं रूपं धृत्वाऽऽत्मनः कलेवरो वर्द्धितः।[१]

प्राचीनकाले आर्यैः पौराणिकविषयेषु पर्याप्तमनुसन्धानं कृतमासीत्। तदानीन्तनः साधारणोऽपि व्यवहारः, आध्यात्मिकविचारधारया ऐक्येन च भावेन क्रियतेस्म। चेतनप्राणिभिः सह पृथ्वी—जल—वह्नि—वायु—वनस्पतिप्रभृतीनां जडपदार्थानामेकताया मनुष्यैः सह पशूनामेकताया देवैः सह मनुष्याणामेकतायाः स्त्रीभिः पुरुषाणामेकतायाश्च विस्तृतं वर्णनं पुराणेषु प्राप्यते। एवं विश्वप्रेम्ण एकता भारतीयेषु व्याप्ताऽऽसीत्। अत एवेश्वरेणापि पशु—पक्षि—मनुष्य—देव—तिर्यगादिषु योनिषु वाराह—मत्स्य—कूर्म—नृसिंह—हंस—हयग्रीवादयोऽवतारा गृहीताः। यद्यपि पुराणेषु भौतिकोन्नतेः वर्णनमाधुनिककालादत्युन्नतं दृश्यते। तथापि आध्यात्मिकभावशून्या भौतिकी समुन्नतिः तत्काले निन्दिता, विनाशकारिणी आसुरी च सम्पत्तिः मन्यतेस्म। तदानीन्तना जनाः स्थूलशरीरव्यवहारस्यैतावन्महत्त्वं न ददतिस्म यावदाधुनिकैर्दीयते। आध्यात्मिकभावेन क्रियमाणं कार्यं ते उत्तमं मन्यन्तेस्म। दैत्यकुलोत्पन्नः प्रह्लादोऽपि आध्यात्मिकवलाऽवलम्बनेन भक्तराजो भूत्वाऽद्यापि समादरेण स्मर्यते, दैत्यापतेर्बलेर्द्वारिप्रहरिवत् सर्वदा गदापाणेर्विष्णोरुपस्थितिश्च श्रूयते।

---

१. *अनुक्रमणिका प्रस्तावना, पृ. २*

पौराणिककाले आर्याणां व्यवहारिकव्यवस्था न हीदानीमिव सङ्कुचिताऽऽसीत्, किन्तु अत्युदाराऽऽसीत्। मातापित्रोर्गुणानां सन्ततिषु समावेशसम्भावनया वर्णव्यवस्थाया— मधिकोविश्वास आसीत्। क्षत्रियेण राज्ञा मनुना निर्मिता मनुस्मृतिर्ब्राह्मणैरपि मान्या जाता। शुकदेववदमलान्तःकरणा मुनयोऽपि क्षत्रियाद्राज्ञो जनकाद् ब्रह्मज्ञानस्योपदेशं गृहीतवन्तः। धर्मव्याधादपि तपस्वी कौशिको नामा ब्राह्मणो धर्मोपदेशं गृहीतवान्। जाजालिनामुनिनापि तुलाधारवैश्याज् ज्ञानं प्राप्तम्। धनुर्विद्याचार्यो ब्राह्मणो द्रोणाचार्यो क्षत्रियसेनायाः प्रधान— सेनापतिर्बभूव। अर्जुनेन नागकन्यायामुत्पन्न इरावान् तथा भीमद्वारा राक्षसकन्यायां हिडिम्बायां जातो घटोत्कचश्च युद्धे क्षत्रियैः सह भागं गृहीतवन्तौ। निषादराजस्य भिल्लजातीयायाः शवर्य्याः पक्षिणोजटायुषश्च कीर्तिराध्यात्मिकविचारशीलतया समादरेण पुराणेषु गीयन्ते। स्त्रीणां भौतिकोऽधिकारस्तदानीं परिस्थित्यनुसारं साधारणपुरुषापेक्षयाऽल्पीयानेवासीत् परं तासां समादरः पुरुषापेक्षयाऽधिक आसीत्। तथा तासां सम्मानापमानयोः पूर्ण ध्यानं दीयतेस्म। एकस्याः सीताया रक्षायै भगवता रामेण दुराचारिणो रावणस्य सर्वस्वं नाशितम्। एकस्या द्रौपद्याः सभायामपमानान् महाभारतसंग्रामे कौरवकुलस्य संहारो जातः। एकस्या एव सत्या अपमानेन क्रुद्धस्य भगवतो महादेवस्य जटाजूटान्निर्गतैर्वीरभद्रादिभिर्वीरैः प्रजापतेर्दक्षस्य यज्ञो विध्वस्तः। तदानीं मातृनाम्ना पुत्राणां सम्बोधने विशिष्टं गौरवमनुभूयतेस्म। यथा श्रीरामस्य कृते कौशिल्यानन्दनः, श्रीकृष्णस्य कृते देवकीनन्दनः, पाण्डवानां कृते पार्थः कौन्तेय इत्यादि नाम गौरवास्पदं मन्यतेस्म। श्रीरामस्योपासना सीतया सह श्रीकृष्णस्योपासना राधया साकं, शिवस्येपासना उमया सार्द्ध स्त्रीजातीनां सम्मानस्योदाहरणं

विद्यते। आद्यायाः शक्तेर्दुर्गाया उपासना जगदम्बारुपेण श्रावं श्रावं कस्य सचेतसो हृदयं स्त्रीजातिं प्रति न प्रफुल्लेत्।

साधारणजनतायाः स्थूलबुद्धित्वात् सूक्ष्मतत्त्ववेतृभिर्महात्मभिर्वृद्धानां मर्यादानामनुसरणं श्रेष्ठं मन्यतेस्म। आध्यात्मिकवुद्ध्युपयोगेन साकमावश्यकता देश—काल—परिस्थित्यनुसारं सामाजिकनियमस्य विधिनिषेधयोर्मर्यादानां परिवर्तनमपि जायते स्म। अनेकस्मृतिरचना विभिन्नदर्शननिर्माणादि अस्यैव परिणामो विद्यते।

पूर्वकाले ब्राह्मणवर्गः आत्मसंयमपूर्वकं ज्ञान—विज्ञानयोः समुन्नतौ सदा तत्पर आसीत्। क्षत्रियाणां जीवनं न केवलं स्वार्थमयमासीत्, किन्तु औरसपुत्रवत् प्रजानां रक्षणे सुखसम्पादने च तेषां जीवनस्याधिको भागो व्यत्येतिस्म।

स्नेह दयां सौख्यं अथवा प्राणप्रियां जानकीमपि लोकाराधनाय मुञ्चतो मे व्यथा नास्तीति[1] मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्यादर्शवचनं स्मारं स्मारं कस्य सचेतसो जनस्य हृदयं न प्रफुल्लेत्। वैश्यवर्गः कृषिः वाणिज्य—पशुपालनादिभिरन्येषामावश्यकतायाः पूर्तौ संलग्न आसीत्। शूद्रवर्गश्च कलाकौशलप्रदर्शन—शारीरिकश्रमादिभिः प्रेमपूर्वकं लोकसेवायां प्रवृत्त आसीत्। वृत्यर्थं केषामपि परस्परं संघर्षो नासीत्।

---

१. *स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।*
*आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।।* —उत्तररामचरितम्।

बाल्यावस्थायां सर्ववर्गजना: ब्रह्मचर्यव्रते स्थिता: शारीरिकमानसिकञ्च बलं सम्पादयन्त: स्वस्वयोग्यतानुसारं विद्याऽध्ययनं कुर्वन्ति स्म। विद्याऽध्ययनं समाप्य गृहस्थाश्रमे प्रविश्य युवावस्थानुसारं सवर्णयाकन्यया साकं विवाहं कृत्वा लौकिकं व्यवहारं सञ्चालयन्ति स्म। प्रौढावस्थायां स्वमुत्तराधिकारिणं गृहस्थव्यवहारेषु प्रवीणं विधाय स्वं कार्यभारं तस्मै समर्प्य वानप्रस्थाश्रमं प्रविशन्तिस्म। वृद्धावस्थायां सर्वानाधिकारान् कर्त्तव्यं स्वत्वं च परित्यज्य संन्यासाश्रमे स्थित्वा ज्ञानमर्जयन्त: स्वानुभवेन ज्ञानोपदेशद्वारा च सर्वहित–साधने निरतास्तिष्ठन्ति स्म। एवं सर्वोऽपिवर्ग: स्वस्वकार्यक्षेत्र–कर्त्तव्यानुसारं स्वं स्वं कर्त्तव्यं पालयन् परस्परं सहयोगेन सुखपूर्वकं नैजं जीवनं निर्वाहयतिस्म, येनेदं भारतवर्षं सर्वविधसमुन्नतितिशीलं सुखसमृद्धिसम्पन्नं धनधान्यपरिपूर्णञ्चासीत्। येन सर्वे सुखेन जीवनं यापयन्ति स्म।

पौराणिककाले गद्यापेक्षया पद्यस्याधिक: प्रचार आसीत्। अत: पुराणेषु प्राय: सर्व वर्णनं पद्येष्वेव कृतं दृग्गोचरी भवति, यत्र लेखकरुच्यनुसारं शृङ्गारादिरसानां समावेशो: जातोऽस्ति। पुराणेषूपमोत्प्रेक्षा रुपकदृष्टान्तातिशयोक्तिप्रभृतयोऽलङ्कारा अपि स्थाने स्थाने चित्तं चमत्कुर्वन्ति। प्रसादादयो गुणास्तु सर्वत्र चित्तमाह्लादयन्ति। श्रीमद्भागवतस्य पञ्चमे स्कन्धे विष्णुपुराणस्य चतुर्थेऽंशे कल्किपुराणे च काव्यकौशलपूर्णा अभिनवभावगुम्फिता समासबहुला गद्यच्छटा कादम्बरी प्रियदर्शिकादिसमतायां न्यूना नास्ति।

पुराणेषु मानवानां रुचेरुत्तमोत्तमेषु आचरणेषु वर्द्धनाय घृणितकर्मभ्यो व्यावर्तनाय च रोचक, भयानक, भावपूर्णा कथा: कथिता: सन्ति। पौराणिकानां गूढरहस्यान्नं सम्यगवगतये निम्नाङ्कतेषूदाहरणेषु ध्यानं देयम्।

(क) उत्तमादप्युत्तमो मानवो यदा कस्मिंश्चिद् व्यसने आसक्तो जायते, तदा तस्य बुद्धिभ्रंशो भवति, न केवलं महान्तमनर्थमेव करोति प्रत्युत् तस्य पतनञ्च जायते। पतिव्रता नारी पत्यु: पतनसमयेऽपि ततो विमुखा न भवति, अपितु तदुद्धाराय निरन्तरं प्रयतमाना सती तदुद्धारं करोत्येवेत्यादर्शमयं भावं प्रदर्शयितुं, पुराणेषु नलदमयन्तीत्यादीनां इतिहास: प्रकटितोऽस्ति।

(ख) सत्पालनपराकाष्ठापरिणामप्रदर्शनेन सह राज्ञा स्वकीया: प्रजा: प्रति कथंकारं दयालुना भाव्यमिति भावं बोधयितुं राज्ञो हरिश्चन्द्रस्येतिहास: प्रदर्शितो वर्तते।

(ग) रामरावणयुद्धकथानकस्याऽभिप्रायोऽस्ति यदेकस्मिन् सात्विके महापुरुषे इयती आत्मशक्तिर्विद्यते यथा स्व अस्त्रहीन: सेनाविहीनो वा महाप्रतापिनं सर्वशक्तिशालिनं सर्वविधभौतिकशक्तिसुसज्जितमपि शत्रुं विजयते एव। अहङ्कारीजन: कियानपि तपस्वी, प्रभावशाली, ऐश्वर्यसम्पन्न:, अगाधनीतिनिपुण:, उच्चवर्णो, भौतिकोन्नतिशिखरारुढश्च कथं न स्यात्,किन्तु तत्रासुरीभाव एवं वर्द्धते येन तत् सर्वनाशो जायते।

(घ) देवासुरसंग्रामे भगवतो विष्णोः साहाय्येनासुराणां पराजयस्य देवानां विजयस्य च रहस्यमस्ति यत् विष्णुरुपस्यात्मज्ञानस्य प्रभावेण सात्त्विकदैवशक्तयो राजसत्तामसासुर–शक्तिषु विजयं नूनं प्राप्नुवन्ति।

(ङ) पृथिव्यां यदा जनसंख्या वर्द्धते तदा जनेषु व्यक्तित्वभावःप्रबलो जायते, क्षुद्रस्वार्थाय परस्परं रागद्वेषौ उत्कृष्टौ भवतः, यतः आसुरभावस्य प्राबल्यं जायते, समाजे च विभिन्नः संघर्ष उपतिष्ठते। परिणामस्वरूपं जनतासु भयङ्करा अशान्ति रुद्भवति। एवं भौतिकसमुन्नत्या संसारे ईदृशी विषमता वर्द्धते यया संसारधारिका शक्तिरपि विक्षुब्धा जायते जनाश्चात्यन्तं दुःखिनो भवन्ति। यदा सर्वेषां मनांसि विषमतां दूरीकर्तुं भावना जागरिता भवति, तदा सर्वात्मना केन्द्रभूतः परमात्मा सात्त्विकशक्त्यनुसारं विशेषकलया केनचिद् व्यक्तिविशेषेण प्रकटीभूय समुचितव्यवहारद्वारा वर्द्धितां जनसंख्यां छिन्नां–भिन्नां विधाय विषमताञ्च दूरीकृत्य शान्तिं स्थापयति, सदुपदेशद्वारा च धर्म–कुप्रवृत्तिं परिवर्त्य समुचितस्य मानवधर्मस्य प्रचारं प्रसारं वा विधत्ते। इयमेव विषयं स्थूलरुपेणावबोधयितुं यदा पृथिव्यां पापाधिक्येन पापिनां भारं वोढुमसमर्था पृथ्वी दुःखिनी जायते, तदा 'वेधसः समीपे गमनं तथा देवैः सह क्षीरसागरे शयानस्य विष्णोरभ्यर्थनं तदनुसारमवतारं गृहीत्वा भारापनयनं धर्मस्थापनं सज्जनसंरक्षणञ्चेति कथा कथिताऽस्ति।

(च) एकस्या द्रौपद्याः पञ्चानां पाण्डवानां धर्मपत्नीकथया प्राचीनकाले पातिव्रत्य धर्मस्योद्देश्यं केवलं पाशविकविषयवासनापूर्तिरिव नासीत्, नापि स्त्रीणां स्थूलशरीरस्पर्शाय

पुरुषेषु पशुवत् संघर्षो भवितस्म। कथायामस्यां पञ्चभिः महाशूरैः पतिभिः सह द्रौपद्याः समान प्रेम्णः समानसेवायाः समानप्रसन्नताया अनुपमपातिव्रत्यधर्मस्य च यावान् महिमा विद्यते तावदेव पञ्चानामपि पाण्डवानामात्मसंयमस्य पत्नीव्रतपालनस्य धर्मपरायणतायाश्च महत्त्वमप्यस्ति। अपि पत्या सहानंन्यभावेन प्रेमपूर्वकं पातिव्रत्यधर्मस्य पालनकर्त्र्या पत्न्या इयान् महिमा वर्द्धते। यत् सा लोकपूज्या समादरणीया वन्दनीया च जायते। तथा पत्युरपि पत्न्या सह सप्रेमव्यवहारेण समादरेण तत्प्रसन्नतासम्पादननेन चात्मवलं वर्द्धते। स संसारे समादरणीयः श्रद्धेयश्च भवति। एतदेवासीत् कारणं यद् अनन्येन प्रेम्णा पञ्चापि पतीन् समानतया प्रसन्नान् कृत्वा तेषामुन्नतौ सहायिकाया द्रौपद्याः तथा तया सहानन्यभावेन धर्मपूर्वकं व्यवहारकारिणां सत्यव्रतिनां संयमिनो धार्मिकाणाञ्च पञ्चानां पाण्डवानामात्मविकाश एवं जातो येन ते जगद् वन्द्या जातास्तथा परमात्मनो विशेषविभूतिः भगवच्छ्रीकृष्णरुपेण सर्वदा तेषां पार्श्वे उपस्थिताऽऽसीत्। एवमाध्यात्मिकाधिभौति-काधिदैविकनैतिकविषयकाभिरगणितकथाभिः पुराणानि परिपूर्णानि सन्ति।

पुराणानि प्राचीनस्य भारतस्यानुशीलनाय प्रमाणिकानि स्रोतांसि स्वीक्रियन्ते। पुराणानां विविधवृत्तान्ताख्यानोपाख्यानगाथासु भारतीयस्य धर्मस्य समाजस्य विभिन्नावस्थाया दर्शनं जायते। अतः पुराणानां सांस्कृतिकाध्ययनार्थं तेषां धार्मिकं सामाजिकञ्चाध्ययनमेको महत्त्वपूर्णो विषयोऽस्ति। पुराणेषु शैवशाक्तवैष्णवादयोऽनेकविधा धार्मिका विचारा उपलभ्यन्ते। पुराणान्तर्गतानां धार्मिकप्रवृत्तीनामध्ययनं भारतीयं धर्मं तथा तेन सह समाजस्य सम्बन्धं

प्रदर्शयितुं सहायकं भवति। अतः पुराणानां सामाजिकाध्ययनाय सर्वप्रथमं विभिन्नानां धार्मिकविचारधाराणां निरीक्षणं नितान्तमपेक्षितमस्ति।

पुराणानां धार्मिकप्रवृत्तिभ्यः तत्कालीनायालोकरुचेः यथार्थः परिचयः प्राप्यते। पुराणेषु लोकजीवनेन सह सम्बद्धानां व्रत–दान–विविधधर्मादीनां निधानं विद्यते प्रत्येकं पुराणं स्वकीयधार्मिकप्रवृत्तिद्वारा भारतीयामाध्यात्मिकीं तत्सम्बद्धां लौकिकविचारधारां च स्पष्टीकरोति।

वैष्णवपुराणेषु विष्णुभक्त्या सह वैष्णवधर्मस्य क्रमिको विकासः परिलक्ष्यते। शैवपुराणेषु शैवमतेन साकं पाशुपतादय सिद्धान्ता उपलभ्यन्ते। ब्राह्मेषु पुराणेषु ब्रह्मणो महिम्ना सह ब्रह्माण्डस्य समस्तसृष्टिरचनाविषये विवेचनमस्ति। धार्मिकप्रवृत्तिभिः सह एषा विशेषता विभिन्नकालीनायां लोकरुच्यां प्रकाशं प्रसारयन्ति। अतः पुराणानां धार्मिकविचारेषु सामाजिकस्य अध्ययनस्य महत्त्वपूर्णा सामग्री वर्तते।

पुराणान्तर्गतानां तीर्थ–व्रतादीनां माहात्म्यमेकोऽन्यो विषयोऽस्ति। प्रत्येकमाहात्म्यस्य प्रामाणिकतासिद्धये एकमुपाख्यानं सम्बद्धमस्ति। तीर्थ–व्रत–माहात्म्यानि पुराणानामभीष्टां विचारधारामेव पोषयन्ति। शैवपुराणानि तीर्थ–व्रत–माहात्म्यविवेचने केवलं तान्येवो–पाख्यानानि प्रस्तुवन्ति, यानि शिवसम्बद्धानि सन्ति। एवं वैष्णवपुराणानि विष्णुमहत्त्वसूचकानि उपाख्यानानि वर्णयन्ति। परं वायु–मत्स्य–ब्रह्म–ब्रह्माण्डहरिवंशानि साम्प्रदायिकप्रवृत्तिभिः न सन्ति प्रभावितानि।

हिन्दुजातेः सुदृढ़ो विश्वासोऽस्ति यद् धर्माधर्मयोर्निर्णये वेद एव सर्वाधिको मान्यः प्रामाणिकश्च ग्रन्थो वर्तते। यतो हि वेदः साक्षादीश्वरस्यानादिर्वाणी ज्ञातोपदेशस्यागार ऐहलौकिकीं पारलौकिकीं च समस्यां समाधातुमाधारोऽस्ति। अतएव देशीयैर्विदेशीयैश्च विद्वद्भिरेकस्वरेण वेदाय मान्यता प्रदत्ताऽस्ति। ये हि सिद्धान्ता वेदेषु निर्दिष्टा विद्यन्ते। त एव स्मृतिद्वारा समर्थिताः सन्ति तथा तेषामेव गुणगानमुदाहरण प्रत्युदाहरणद्वारा पुराणेषु कृतं विद्यते।[१] अपि च सर्वशास्त्रार्थनिर्णये तिस्रोविधाः प्रमुखाः प्रोक्ताः।[२]

वेदानां दुरुहार्थस्य ज्ञानं साधारणबुद्धिगम्यं नास्ति। अल्पज्ञानं जीवानां तदसम्भवं मत्वा मन्वादिभिः महर्षिभिः समाधिद्वारा प्राप्तया निर्मलबुद्ध्या वेदार्थान् स्मारं स्मारं तत्तत् स्मृतीनां निर्माणं कृतम्। ततो भगवान् व्यासः वेदप्रतिपादितानि स्मृत्यनुमोदितानि च विविधानि धार्मिकतत्त्वानि सरलतया अवबोधयितुं प्राञ्जलया भाषया पुराणानि रचनाञ्चकार। अतो धर्मनिर्णये एषां त्रयाणामेव मुख्यता विद्यते। एषु त्रिषु सर्वोच्चस्थानं वेदस्यैवास्ति, ततः स्मृतेः तदनन्तरं पुराणानां प्रामुख्यमस्ति। व्यासस्मृतौ स्पष्टमुल्लिखितं वर्तते यद् यत्र च त्रिषु श्रुति–स्मृति–पुराणेषु परस्परं विरोध उपलभ्येत तत्र श्रुतेर्वचनमेव प्रामाण्यं

---

*१. यच्च दृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल।*
*उभाभ्यां यत्तु दृष्टं हि तत् पुराणेषु गीयते।।*

*— (स्कन्दपुराणे रे.१/२३)*

*२. आत्मनो वेद विद्या च इश्वरेण विनिर्मिता।*
*शौनकीया च पौराणी धर्मशास्त्रात्मिका च या।।*
*तिस्रो विद्या इमा मुख्याः सर्वशास्त्रविनिर्णये।।*

*— (स्कन्दपुराणे रेवाखण्डे १/१७)*

मन्तव्यम्। यदि च स्मृतिपुराणयोर्विरुद्धं किञ्चिद्वचनं प्राप्येत तदा तत्र स्मृतिरेव प्रमाणरूपेण ग्राह्या भवति।[1]

धर्मनिर्णयसम्बन्धे पूर्वमीमांसाप्रणेत्रा महर्षिणा जैमिनिना स्पष्टमुल्लिखितमस्ति यत् स्मृतौ पुराणेषु च यदि किञ्चिद्वचनं वेदविरुद्धं प्रतीयेत् तर्हि तदुपेक्षणीयमस्ति, किन्तु वेदे, स्मृतौ पुराणे चानुकूलं वचनं यदि मिलेत् तर्हि तद्वचनमनुमितश्रुतिमूलकं मत्वा प्रमाणकोटौ समानेयम्।

"विरोधे त्वनपेक्षं स्यादसति ह्यनुमाने।" –(पू.मी.सू. १–३–३)

स्कन्दपुराणे लिखितमस्ति यत् – श्रुति–स्मृति–पुराणानि इमानि त्रीणि विदुषां नेत्राणि सन्ति। य एभिस्त्रिभिर्विचारयति स माहेश्वरांशो मन्यते।[2] देवीभागवतेऽयंप्रसङ्गः समायाति यदैकदा लोककल्याणभावनयादेवर्षिर्नारदो नारायणं पप्रच्छ – भगवन्! शास्त्राणां बाहुल्याद् धर्मनिर्णये किं प्रमाणं मन्तव्यम्? तदाकर्ण्य नारायणेन स्पष्टमुक्तम् – देवर्षे!

---

१. *श्रुतिस्मृतिपुराणानां विरोधो यदि दृश्यते।*
*तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरा।।*

*– (व्याससमृतिः १/४)*

२. *श्रुतिः स्मृतिः पुराणानि विदुषां लोचनत्रयम्।*
*यस्त्रिभिर्नयनैः पश्येत् सोऽंशो माहेश्वरो मतः।।*

*– (स्कन्दपुराणे रे.ख. १/१५)*

धर्मनिर्णये श्रुति–स्मृती नेत्रे मन्तव्यो तथा पुराणं हृदयमवगन्तव्यम्। अत एव त्रिषु यत् किमप्युक्तं विद्यते तद् धर्मोऽवगन्तव्यः।[१]

ननु पुराणानां मुक्तिप्रयोजकत्वं कथमिति चेत्, अत्रोच्यते – ऋतम्भरप्रज्ञया कृतसर्वतत्त्वसाक्षात्काराः लब्धयथार्थज्ञाना हि भारतीयसमाजनियमप्रवर्तका मनु–व्यास–बाल्मीकिप्रभृतयो महामुनयः समाजोपकाराय निरन्तरं प्रयतमाना आसन्। यथा–यथा समाजेभ्यः अनाचारा अत्याचारा–दुराचारा–पापाचाराश्च दूरी भवितुमर्हन्ति, तथा तथा ते सततं चेष्टन्तेस्म। यथा वा दुवृत्तैः सवलैः सुवृत्ता नाभिभूयेरन्, पापाचारिभिः सत्कर्मचारिणो न पराभूयेरन्, समाजे किमप्यपूर्वं स्वर्गसुखमुपस्थितं स्यात्, मानव जन्म सार्थकं सम्भवेत्, सततञ्च सत्कर्मसु लोकानां स्पृहा समुपजायेत्, तथा नियमान् व्यवस्थापयन्तः जगतीतलेऽस्मिन् आर्य सनातनधर्ममक्षुण्णं परिचालियितुकामा निष्कामा महामनसः पूज्यतमास्तेऽत्र भूतले विहरन्तिस्म।

इदमसत्कर्म, एतदाचरणेन गाढतमसुखमुत्पद्यते सद्यः येन पृथ्वीमिमां परिहाय लोकान्तरगमनेनाऽपि नास्ति विस्तारः। तत्र प्राक्तनेन दुष्कर्मणा प्राप्तं नरकमपि सर्वविध–दुःखदायकमुपस्थितं भवति, तदा मनसि एवंविधा भावना, यत् यदि कदाचिद् भूयो

---

*१. बहुत्वादिह शास्त्राणां निश्चयः स्यात् कथं मुने!*
*श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्।।*
*एतत् त्रयोक्त एव स्याद् धर्मो नान्यत्र कुत्रचित्।।* – *(देवीभागवते ११/१/२१)*

मानवजन्म लभेयं तदा न पुनः पापलेशमपि समुपार्जयेयम्, येनादीनामीदृशं कठोरतरं घोरं दुःसहं दुःखमनुभूयत इति।

एतच्च विवरणं पुराणप्रणेता भगवान् वेदव्यासः सरसेन, सरलेन, सुगमेन समीचीनेन शब्दोपन्यासेन संयोजयामास। पुराणेषूपन्यासमुपखेनोपस्थापितं पूर्ववर्तिजनानां वृत्तं पठन्तो विश्ववर्तिनो जीवा असत्कर्मणोविपन्निर्वर्तकतां सत्कर्मणश्च सुखादिसम्पादकतां ज्ञात्वा शुभकर्मणि प्रवर्तन्तेऽसत्कर्मभ्यश्च प्रतिनिवृत्य सुखमयं जीवनं विधायान्ते विलसन्ति निरन्तरं मानवजन्मनो मुख्ये लक्ष्ये परमानन्दे परमात्मनि।

प्रथमतो बाल्मीकिनामा महर्षिस्तमसातीरे क्रौञ्चवधसमुत्थदुःखाऽत्यन्त व्यथितहृदय आत्मनोऽद्भुते प्रबन्धमहाकाव्ये (रामायणे) प्राधान्येन रामचरितं रावणचरितं च वर्णनीयतयाऽवलम्बे। तत्र मर्यादापुरुषोत्तमस्य श्रीरामस्यादर्शमयं पवित्रं चरित्रं तदनुयायिनां लक्ष्मणादीनां विशुद्धं प्रेम, कौशल्यादीनां मातॄणामादर्शस्नेहातिरेकम्, हनुमदादीनां भक्ति वैलक्षण्यम्, सुग्रीवादीनामनुकरणीयं साख्यम्, निषादाधिपतेः सेवाकार्यं च प्रदर्शयामासा, येनाऽतिदुःसहे कष्टे निपतितोऽपि रामभद्रः कष्टं कष्टतया विज्ञातुं न शशाक, महादुःखेऽपि काञ्चित् सुखसन्ततिमेव समाशिश्रिये।

तस्यादर्शमयी ललनाललामभूता त्रिलोकमणी रमणी सहधर्मिणी जनकनन्दिनी भगवती सीता मूर्तिमतीव सतीत्वख्यातेः, सुखभोग्ययोग्येयौवने वयसि सर्वं राजकीयं

सुखमेकपदे परित्यज्य घोरप्रचारे कान्तारे सुखेन स्वं पतिदेवं श्रीराममनुवव्राज। पतिसुखेनैव सर्वं सुखं मन्यमाना यथा पत्युर्न क्लेशवहः सम्भवेत्तथा सर्वदा यततेस्म।

रामो हि लोकशिक्षार्थमेव पितुरादेशसङ्केतमात्रेण विमातुः प्रीतये उपस्थितमपि वसुधाधिपत्वं सहसा सहर्षं तृणाय मत्वा चतुर्दशवर्षाणि यावदरण्ये स्थितो न लेशतोऽपि दुःखं समाश्रयत्, प्रत्युत राज्यभोगतोऽप्यधिकमानन्दं लेभे।

भरतो नाम कैकेयीगर्भजो महोदारतादिगुणगुम्फितहृदयस्त्यागशीलतया भ्रातृप्रेम्णा च सार्वभौमपि वसुधाधिपत्वं राज्यमनङ्गीकृत्य ज्येष्ठं भ्रातरं श्रीमन्तं रामं प्रत्यावर्तयितुं चित्रकूटं प्रतस्थे। तत्राऽसफलो भरतः रामपादुकामेव गृहीत्वा स्वशिरसि च संवहन् तामेव राजसिंहासने संस्थाप्य स्वयं नगराद्बहिरेव नन्दीग्रामे रामस्य प्रत्यावर्तनं यावद् राम इव कृततापसवेशः तमेव ध्यायन् समयमतिवाहितवान्।

एवं प्रकाराणि बहूनि आदर्शमयानि उपदेशप्रदानि समाजसमुन्नयनसाधनभूतानि राष्ट्रहितकराणि उभयलोकसुखसम्पादकानि सद्वृत्तानि समुपलभ्यन्ते पुराणेषु इतिहासे च।

पुराणेतिहासयोरेतादृशानां सद्वृत्तानां पर्यालोचनात् परिणामे रामादीनां सद्वृत्त–धारिणां शुभसम्पादकतादर्शनेन जायते सद्वृत्ताऽवलम्बने मानवानां भूयसी समासक्तिः।

तत्रैव दुर्वृत्तान्यपि कानिचिदुपलभ्यन्ते। यथाहिक्षपाचरनाथो रावणो निखिलदुष्ट–कर्मानुबन्धो पापस्य सिन्धुरिव विविधदुर्विधानेन व्यस्तं चकार समस्तं जगत्, दुःखितानि च कृतवान् धर्मैकव्रतिनां निःस्पृहाणां यमनियमादिसाधनसमासक्तमनसां मुनीनां मनांसि, विध्वस्तवांश्च जगन्मङ्गलसाधनभूतं महायज्ञादिकं महर्षेर्विश्वामित्रस्य तपोवने राक्षसी राक्षसांश्चोपस्थाप्य।

तेन तेन पापसम्पादकेन धर्मविघ्नकर्मणा परिणामे राक्षसकुलविनिपात एव समुपलभ्यते। शुभकर्मानुरक्तानां शुभसम्पाताः। अशुभकर्माऽवलम्बिनामशुभसम्पाताश्च प्रादुरभवन्।

इतिहासेषु पुराणेषु च एवंविधानां सत्कर्मणां शुभहेतुवादर्शनेन, अशुभकर्मलाभ–शुभहेतुवादर्शनेन च लोकानां शुभेषु रतिमुत्पाद्य, अशुभकर्मणामशुभसाधनताभावेद्य तत्र तत्र प्रवृत्ति–निवृत्तिसमपादनद्वारा परमपुरुषार्थं प्रति अनुकूलतासम्भवति पुराणानाम्।

एवं महाभारते पुण्यचरित्राणां युधिष्ठिरादीनां शुभसाधकता, पापाचारिणां दुर्योधनादीनां चारित्रवर्णनेन असद्वृत्तस्य परिणामे विनाशमात्रफलकतामुपदर्श्य तथैव सम्पादितः कोऽपि सद्वृत्ताऽसद्वृत्तयोर्ग्रहणपरिहारोन्मुखप्रसारो नरनारीसमाजेषु।

सन्ति हि पुराणेषु बहूनि पुण्यप्रकर्षसम्पादकानि वृत्तानि। यथा सुचरितानां

चरित्रप्रकर्षवर्णनमुखेन — दुष्टचरित्राणां चरित्रापकर्षवर्णनेन च साधारणजनानां व्यवहार–विधौ शिक्षाप्रदानं पुराणानामुत्तमं कार्यं दर्शं दर्शं कस्य सहृदयस्य चेतो न चमत्कृतं जायते।

पुराणेषु चतुर्णां वर्णानां, आश्रमाणां, पुरुषार्थानां, राजनीतेः, समाजरीतेः, लोकव्यवहारस्याचारविचारादीनां यथेष्टं वर्णनं वर्तते। उपासनाया भाण्डारः, मुक्तिद्वारञ्च पुराणमेवास्ति। पञ्चदेवोपामनाया विचारः भगवदवतारादीनां च विशेषता पुराणेषु प्रतिपादिताऽस्ति। नवधाभक्तिद्वारा भगवच्चरणेषु अनुरागविधानं पुराणेष्वोपलभ्यत एव। संसारस्य सर्वविधानां विषयाणामन्वेषणं पुराणद्वारैव भवितुमर्हति। किं बहुना? लोकद्वय–साधनप्रकारः पुराणेष्वेवोपलभ्यते।

एवं पुराणेषु बहूनां महापुरुषाणामत्यन्तमनोहराणि आदर्शमयानि चरित्राणि चित्रितानि सन्ति। तानि विवेकदृष्ट्या सम्यगनुतिष्ठन्तो मानवाश्चतुर्णामपि धर्मार्थकाममोक्षाणां साधनं कर्तुं शक्नुवन्ति। तस्मात् सिध्यति निःसंशयं पुराणानां मुक्ति प्रयोजकत्वम्।

पुराणप्रतिपादितया भक्त्या भगवति समासक्तचेतसां भक्तानां मनोमधुपा निरन्तरं भगवच्चरणनिलीनास्तद्रूपं ध्यायन्तो श्रद्धया च तच्चरित्रं शृण्वन्तो मुक्ता भवन्ति। तथा चोक्तं श्रीमद्भागवते —

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो
नर्नाना: प्लवो भगवत: पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद्विविधदु:ख दवार्दितस्य।।[१]

अत: संसारसागरोत्तरणाय पुराणानुसारं भगवल्लीलारसास्वादनमेव परमं नि:श्रेयसकरंसाधनं विद्यते। अत एवामलात्मना भगवता वैयासकिना शुकेन श्रीमद्भागवते अकामनया सर्वकामनया मोक्षकामनया वा भगवच्चरणारविन्दसेवनमेव सिद्धान्तितम्।[२]

रामकृष्णदासश्रीवैष्णव
१०/१२/२००२
(रामकृष्णदासश्रीवैष्णव:)

१. श्रीमद्भागवते १२/४/४०

२. अकाम: सर्वकामो वा मोक्षकाम उदारधी:।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्।।

— (श्रीमद्भागवते २/३/१०)

# प्रथमोऽध्यायः

१. धर्मपदार्थ विवेचनम्
२. धर्मभेदाः
३. धर्मोपयोगिता
४. श्रीमद्भागवतानुसारम् धर्मफलम्

# प्रथमोऽध्यायः

## (१) धर्मपदार्थ विवेचनम्

समष्टिव्यष्टिरुपब्रह्माण्डपिण्डमयसम्पूर्णसृष्टिक्रियां यो धरति स धर्मः। व्युत्पत्ति–लभ्यस्यैवार्थस्य श्रुतिस्मृतिबोध्यत्वं तद्यथा – "धर्मो विश्वस्य जगतः प्रतिष्ठा" लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति" "धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः, यत् स्याद् धारणसंयुक्तं स धर्म इति निश्चयः" इति। धर्मेणैव पूर्वसंस्कारमनुसृत्यानन्तपिण्डव्रह्माण्डात्मक सृष्टिरुत्पत्तिलयशालिनी यथावद् सम्भवतीति दृश्यते। प्रत्येकव्रह्माण्डान्तर्गता अनेक–ग्रहोपग्रहादयः स्वस्वस्थानत उत्पद्य स्वस्मिन्–स्वस्मिन् स्थानेऽधिवसन्तः पिण्डमयाऽनन्तजीवशरीरं समाश्रयन्तो यन्महाकाशे यथावत्स्थितिं लभन्तेऽत्रापि हेतुर्धर्म एव। धर्मेणैव किल जीवदेहात्मकस्य पिण्डस्य सृष्टिस्थितिप्रलयाः सम्पद्यन्ते। उद्भिज्जस्वेदजाण्डजजरायुजयोनीनामगणितानि स्वरुपाणि धारयन्तो जीवाः क्रमशः उन्नतिं प्राप्य मानवीं योनिमासादयन्त्येतदपि धर्मनिबन्धनमेव। धर्मस्यैव साहाय्यतः प्राणिभिरैहिकामुष्मिकाभ्युदयं प्राप्नुवद्भिः क्रमशो वन्यपशुवद्भिन्नत्वाद्य–वस्थातोऽन्त्यजैरनार्थैरार्यैः शूद्रैर्वैश्यैः क्षत्रियैर्ब्राह्मणै र्वेदज्ञैस्तत्त्ववेतृभिर्वानप्रस्थैः संन्यासिभिः कुटीचरैर्बहूदकैर्हंसैः परमहंसैश्च भवद्भिरन्तेऽपवर्गोऽपि प्राप्यते। प्रथमदशायां जीवा अभ्युदयेन युज्यन्ते च मोक्षमाप्नुवन्ति, तत्र धर्म एव कारणतामधिगच्छति।

किं बहुना, सत्त्वबाहुल्यादिष्टसाधकत्वं धर्मस्य भवत्येव। रजः साहाय्यमाश्रित्य तमोऽभिमुखीभूय स्वस्वकारणसत्तायां जडपदार्थो लीनो भवति। यथोद्भिज्जशरीरवतः काष्ठस्य मृतशरीररस्य वा तमोगुणबाहुल्यात् सर्वेषां तदीयक्षित्यादिभूतपञ्चकपरमाणूनां यथायथं स्व–स्वहेतुभूते महाभूते पञ्चके जायते लयः। यदि चोक्तशरीरद्वयं नाग्निसात् क्रियेत्, तत्तथैव स्थाप्येत वा तथापि तत् कालान्तरे यथावत् परिणामात् पूर्णलयमाप्नुयात्। परन्तु नैवंविधो विलयः सम्पद्यते चेतनस्य सत्त्वसापेक्षस्य। अयं हि क्रमशः सत्त्वगुणोद्रेकादुद्भिज्जस्वेदजाण्डाज जरायुजयोनिमासादयन् मनुष्ययोनिमुपैति। निरुक्तयोनिषु यथाक्रमं सत्त्वगुणो विकाशमापद्यते। नृयोनावपि तेनैव न्यायेन प्रथमावस्थायामैहिकोन्नति द्वितीयदशायां च पारलौकिकोन्नतिः। एतदेवालोक्य महर्षिणाजैमिनिना प्रतिपादितं यज्जीवानां गति सत्त्वप्राधान्यमूलेति। धर्मोऽभ्युदयप्रदो धर्माधिष्ठितस्य न कर्हिचिदधःपातः। किन्तूत्तरोत्तरमुन्नतिरेवोपजायत। अत्र स्मर्यते –

प्रकाशकत्वात्सत्वस्य ज्ञानहेतुत्वमीर्य्यते।
लघुत्वाद्दूर्ध्वनेतृत्वं सत्वाद् धर्मो हि निर्बभौ।।

धर्मः सत्त्वगुणप्रकाशकतया ज्ञानहेतुः। सूक्ष्मतया सत्त्वोन्नतिदानञ्च।

धर्मोऽयं सर्वेषां निःश्रेयसकरोऽर्थात् मोक्षजनकोऽस्ति। विलक्षणशक्तिवैशिष्ट्यात् परब्रह्मणः पर्याप्तां शक्तिं विभ्रतो धर्मस्यैवाश्रयणात् योन्यन्तरं परिभ्रमन् जीवो मनुष्ययोनिं प्राप्नोति। अज्ञानततिमग्नस्य बालस्य मातृकृतपालनपोषणादिवत् धर्मस्याज्ञानजीवदशायां क्रमशो जीवानुन्नमयतो मानवयोनिप्रदभतृत्वम्। तद् योनिंःसमासादयतो जीवस्य कर्त्तव्याकर्त्तव्य–

ज्ञानलाभः। तेन च तस्य स्वपिण्डस्य प्रभुत्वसम्पादकत्वम्। तदानीं स मातृपित्राचाय–'गुरुजनशास्त्रवेद साहाय्येन धर्माधर्मबोधसामर्थ्यात् प्रथमदशायां राजानुशासन–समाजानुशासनयो–र्द्वितीयदशायामाचार्यानुशासन वेदानुशासनयोस्तृतीयदशायां योगानुशासनस्य साहाय्येना–धर्ममार्गं परित्यज्यैकं धर्ममार्गमेवाश्रयते, तथा भवन् क्रमशोऽभ्युदयं अनेकजन्मना सिद्धिं च लभते। तथा चोक्तम्–

"प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः।
अनेकजन्मसंसिद्ध स्ततो याति परां गतिम्।।[१]

स्मर्यते चात्र –

"उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम्।।"

प्रथमावस्थात एव जीवानां तत्तत्कर्माणि तत् सहचरतामापद्यन्ते। क्रियाशुद्धिस्तूत्तेरोत्तरं संस्कारशुद्धितो जायते। मानवा यावन्ति सत्त्वान्युपचिन्वन्ति तावन्त्येव तत्त्वज्ञानान्यपि। उदिते पर्याप्ततत्त्वज्ञाने क्रियाया विरामात् निवृत्तकर्मबन्धनो जीवन्मुक्तो निःश्रेयस्पदं लभते। ईदृशक्रमोन्नतावन्ते परमपदप्राप्त्यर्थञ्च धर्मस्यैव शक्तिमत्वम्।

---

१. *श्रीमद्भागवद्गिता अ. ६, श्लोक ४५*

धर्मसाहाय्येन मानवयोनिमासाद्य ब्राह्मण–देवर्षिप्रभृतिस्वरुपमाश्रयमाणाः शक्नुवन्त्यधिगन्तुमपवर्गमपि। एवमधर्मप्रभावेण मनुष्या नरक–प्रेतत्व–पशुत्वादिकमुपलभमानाः स्थावरत्वं यावदधिगच्छन्तीत्यतोऽधर्मस्याऽधःकारिण्यागतेः सदा सर्वदाभेतव्यम्।

हितप्रतिकूलत्वादधर्मो वर्जनीयः। यदैव मनुष्याः शरीरेण मनसा बुद्धया वाऽधर्मान् संचिन्वन्ति तदैवाऽधःस्मरणं श्रयन्ते। कायिकेनाधर्मेणाधिभौतिकीं, मानसिकेनाधिदैविकीं, बुद्धिकृतेनाध्यात्मिकामवनतिं तदानीमेवाश्नुवते। तस्मात् परमपुरुषार्थं कामयमानैः सद्भिः अनुक्षणमेवाधर्मतो भयं सम्भाव्यस्ततो विरक्तिरास्थेयेति।

ननु धर्माधर्मयो निर्णयः कथं सम्पद्यत इत्यत आहः –

सत्त्वतमोगुणाभ्यां धर्माधर्मयोरवधारणं जायते। सत्त्वगुणवर्द्धकोधर्मः, तमोगुणवर्द्धकोऽधर्मः। स्मर्यते चात्रः –

देवाः उद्भावकं सत्त्वतमसोः कर्म कथ्यते।

धर्मः सत्त्वप्रधानत्वाद धर्मस्तद्विपर्ययः।।

समष्टिव्यष्टिरुपेऽखिलप्रपञ्चे सत्त्वतमोभ्यामेवधर्माधर्मयोर्निर्णयो जायते। तथा – अनुभवाद् वेदशास्त्रसदाचाराणाममुष्मिन् विज्ञाने सम्मतत्त्वाच्च। यतोहि मानवानां काय–वाङ्मनोजन्यासु सर्वास्वापि क्रियासु वेदशास्त्रसदाचारानुरोधेन धर्माधर्मसम्बन्धनिर्णयः

वैदिकदर्शनविज्ञानतो लोके नैतादृशः देशः, कालः, क्रिया, पदार्थो वा विद्यते यत्र धर्माधर्मसम्बन्धो नास्ति। यतो हि धर्म ईश्वरीयनियमः। स्मर्यते च –

या विभर्त्ति जगत् सर्वमीश्वरेच्छा ह्यलौकिकी।
सैव धर्मो हि सुभगे! नेह कश्चन संशयः।।

एवमेवसत्त्वप्रधानभक्ष्ययोजने धर्मः। तमः प्रधानाभक्ष्ययोजनेऽधर्मः। वैदिकविज्ञानाश्रयतो द्रव्यस्य पूतापूतत्त्वविमर्शस्सत्त्वतमोमूलकः सम्पद्यते, न तु ब्राह्यस्वरुपाश्रयतः। सत्त्वगुण सम्बन्धवतः पदार्थसमुदायस्य शुद्धत्वम्। तमोगुणसम्बन्धवतोऽशुद्धत्वम्। स्मृतिशास्त्रे भक्ष्याभक्ष्य निर्णयस्य तदनुसारित्वात्। पूज्यपादा महर्षयो निजसमाधिसिद्धया धिया सत्त्वगुण वर्द्धकान् पदार्थान् भक्ष्यश्रेण्यां तमोगुणवर्द्धकान् पदार्थानभक्ष्यश्रेण्यां गणयामासुः।

एवमेव स्पृश्याऽस्पृश्यविषयेऽपि धर्माऽधर्मौ भवतः। यथा – सत्त्ववर्द्धकस्पृश्यस्पर्शे धर्मस्तमोवर्द्धकास्पृश्यस्पर्शेऽधर्मः। सर्वव्यापकमहाप्राणस्य क्रियावत्त्वात् प्राणशक्तेराकर्षणविकर्षण क्रियायाः सर्वव्यापकत्वाच्च यत्र व्यक्तो यस्मिन् पदार्थे वा यो गुणो विद्यते तत्स्पर्शेन तेनैव गुणेन सम्बन्धोऽभिजायते। अत एव तामात्मिकप्राणिनः तामसिकपदार्थज्ञस्य वा, सात्त्विक प्राणिनः सात्त्विकपदार्थस्य वा स्पर्शेन तद्गुणसम्बन्धोऽवश्यं कर्तरि समुपजायते। विज्ञानञ्चेदमाश्रित्यैव पूज्यपादाः धर्माचार्या स्पृश्याऽस्पृश्ययोर्विचारं शास्त्रे विहितवन्तः। स्मर्यते च दिङ्मात्रं यथा –

प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा।
न संसर्गो व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः।।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह।।
न संवसेच्च पतितै र्न चाण्डालै र्न पुल्कसैः।
न मूर्खैं र्नवलिप्तैश्च नान्यैर्नान्त्यावसायिभिः।।
मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः।
रजो भूर्वायुरग्निश्च स्पर्शमेध्यानि निर्दिशेत्।।

एवमेव शुद्धाऽशुद्धविषयेऽपि धर्माऽधर्मौ भवतः। सत्त्ववर्द्धकशुद्धवस्तुना धर्मस्तमो–वर्द्धकाशुद्धवस्तुनाऽधर्मः। विज्ञानमिदमाश्रित्यपदार्थानां शुद्धाशुद्धयोर्विचारः प्रतिपादितः। यथा– असंख्यजीवान् नित्यस्य प्राप्तस्य मधुपदार्थस्य, गोरोचनादिपदार्थस्य च पवित्रतायाम्प्रथमं स्थानमस्ति। पदार्थानाञ्चामीषां हिंसाजन्यत्वेऽपि विपुलसत्वगुणवर्द्धकत्वात् धर्मजनकत्वमेवास्ति। पवित्रफलमूलकोटिप्रविष्टानामपि पलाण्ड्वादिपदार्थानां तमोगुणवर्द्धकत्वात् आपूतश्रेण्यां गणना अधर्मजनकता च स्वीकृता।

अपरञ्च पूजोपचारेऽपि धर्माऽधर्मयोर्निर्णयो जायते। सत्त्ववर्द्धकपूजोपचारेण धर्मस्तमोवर्द्धक पूजोपचारेणचाधर्मो भवति। इमामेव वैज्ञानिकीं सरणिं समाश्रित्य उपासना कर्मकाण्डयोः पूजाद्रव्योपचारद्रव्ये निर्णीते स्तः। पूजोपचारे धूपदीपनैवेद्यादयः, कर्मकाण्डोपचारे

कुशतिलयवसमिधश्च सत्त्ववृद्ध्या सूक्ष्मगत्याऽन्त:करणशोधनेन च दैवजगत: सम्वन्धाधाने समर्था इति तत्र गृहीताश्च। ननु कस्यांश्चिदुपासनापद्धतौ मारणवशीकरणादि तान्त्रिकयागे, श्येनादिवैदिकयागे च कथं तान्त्रिकद्रव्यसम्बन्ध:? इति शङ्कायाः स्पष्टोत्तरम्। तदेवाह — यैर्यैरुपासनाकार्यैर्यज्ञकार्यैश्चात्मोन्नति — जगत्कल्याण — दैवराज्यसम्वर्द्धनानि सम्पद्यन्ते, तानि सात्त्विककार्याणि। तत्र सात्त्विकोपचारसम्बन्ध आवश्यक:। यत्रानुष्ठानादितरजनामङ्गल—सम्बन्धस्तानि सर्वाणि कार्याणि तामसिकानि। तादृश तामसिककार्यै: सह तामसिकोपचार सम्बन्ध: स्वत: सिद्ध:।

एवमेव वस्त्रस्य परिधानेऽपि धर्माऽधर्मयोर्निर्णयो भवति। सत्त्ववर्द्धक वस्त्रपरिधाने धर्मस्तमोवर्द्धकवस्त्रपरिधानेऽधर्म:। एवमेवान्यत्रापि बोद्धव्यम्।

पूज्यपादैर्महर्षिभिर्धर्माधर्मयोर्व्यापकत्वप्रदर्शनार्थं साधारणेऽपि वस्त्रपरिधानादिके कार्ये तत्सम्बन्धोऽभिधीयते। प्रवृत्याश्रमनिवृत्याश्रममाश्रित्य व्यवहरतोर्गृहस्थसंन्यासिनो: कृते परिधानीयस्य वस्त्रस्य भिन्नतया स्व स्वाधिकारविरुद्धमाचरतोरुभयोरप्यधर्म: — यथा: — संन्यासिनां काषायवस्त्रं परित्यज्य बहुमूल्यवस्त्रपरिधानेऽधर्मा:, ब्राह्मणक्षत्रियविट्शूद्रादीनां गृहस्थानां स्वस्वाधिकारविहितवस्त्रपरिधाने धर्म: इतरयोऽधर्म:। तेनैव नव्यवस्त्रपरिधानक्षणे स्वेष्टदेवस्मृतिपुरस्तत् शास्त्रप्रकारानुसारिणी वस्त्रवृत्ति धर्माय कल्पते।

धर्मस्य विश्वधारकत्वेऽपि तदधिष्ठातुर्विश्वात्मनो विश्वोत्पत्तिस्थितिलयकारिणो विश्वं

विराड्रुपेण स्वस्मिन् विभ्रतः परमात्मनः स्वरुपन्तु सद्रुपम्, चिद्रुपम्, एकमद्वितीयञ्चेति। व्याहृतं च गीतायाम् –

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च।।[१]

अस्ति रुपेण तद् ब्रह्म सत्स्वरुपमत एव नित्यमिति। ज्ञानसत्तारुपेण चित्स्वरुपम्, चित्सत्तामन्तरेण विश्वस्यास्तित्वप्रतीत्यभावात्। एकञ्चाद्वितीयमित्यर्थः। श्रूयते च "सच्चिदानन्द–मव्ययम्" तथा च –

सच्चिदानन्दमद्वैतं सच्चिदानन्दमव्ययम्।
सच्चिदानन्दमात्रं हि सच्चिदानन्द नामकम्।।

नन्वेकञ्चेद् ब्रह्म तत्कथमिह नानात्वप्रतीतिरित्यत आह –

ब्रह्मण एकत्वेऽपि उपाधिसम्बन्धात् भिन्नत्वेन प्रतीतिः। कारणब्रह्मकार्यब्रह्मणोः कार्यब्रह्म तदवस्थान्तरब्रह्मणोश्चैवंविधसर्वप्रकारद्वैतमाने उपाधिरेव निदानम्। मायोपहितत्त्वादेवाज्ञान–जन्येदृशद्वैतप्रतीतिः। तदीय विराड्रुपेण सतः, ब्रह्मरुपेण च चितः, पूर्णतया विकाशः समुपजायते। वस्तुतस्तु कार्यब्रह्मकारणब्रह्मणोरैक्यमेव। अधिगतजीवतत्त्वानां जीवानां

---

१. श्रीमद्भगवद्गीता अ. १४, श्लोक २७

रजस्तमोगुणतारतम्येनाज्ञानस्यापरिमेयत्वाद् यावद् भेदप्रतीतिस्तया ज्ञानजन्योपाधिरेव निमित्तत्वम्।

स्मर्यते च –

नैवात्र विस्मयः कार्यो भवद्भिर्विप्रपुङ्गवाः!।
ईश्वरस्य च जीवस्य भेदो ब्रह्मणि कल्प्यते।।
मायाविद्यात्मकान्नूनं क्रमादावरणाद् द्विजाः!।
ब्रह्मणः प्रतिविम्बो हि जीवो देहाभिमानकः।।
स्वस्मात् स्वभावतो भिन्न ईश्वरस्तेन मन्यते।
ईश्वरस्य च जीवस्य भेदो यावदुपाधितः।।
तिष्ठेत्तावत्क्षणं विप्राः! कथञ्चित् क्व कदाचन।
जन्ममृत्युप्रवाहोऽसौ संसारो न निवर्तते।।
ईश्वरे चैव जीवे च भेदबुद्धिः कदाप्यतः।
न कर्त्तव्या द्विजश्रेष्ठाः! तत्त्वज्ञैरात्मवेदिभिः।।

ननु निरस्ताज्ञानदशायां कीदृशी प्रतीतिरित्यत्राहः – कारणस्य ब्रह्मणः कार्यरुपो–पाध्यादेश्चाभिन्नत्वेनैवयावद् एकत्वप्रतीतिः। यद्यप्यज्ञानदशायां जीवाः कारणब्रह्मरुपेणात्मना कार्यब्रह्मरुपस्य परिदृश्यमानजगतः पृथक्त्वं पश्यन्ति। तथाप्यात्मज्ञानलाभानन्तरं तत्त्वदर्शिनामित्थं बोधः समुपजायते यत् कारण–कार्यरुपयोरात्मजगतोरैक्यमेव। अज्ञानजनन्यविद्या ज्ञानजननी च विद्या। विकसति तमोगुणेनाज्ञानं सत्त्वगुणेन तु ज्ञानमिति। द्वैतप्रतीतौ बन्धने चाज्ञानमेव

कारणम्। ज्ञानेनाद्वैतब्रह्मसद्भावसमुदयानन्तरं लभ्यते च परमपुरुषार्थः। धर्मसाहाय्येन संस्कारशुद्धिं क्रियाशुद्धिञ्च विद्धतः साधकाः क्रमशश्चित्तशुद्धिं लभमाना आत्मज्ञानं प्राप्नुवन्ति। तदानीमेव जीवन्मुक्ता अभेदं प्रतियन्ति, अनुभवन्ति च कारणब्रह्मकार्यब्रह्मणोरैक्यम्। यद्यपि घटं पश्यतामज्ञानां तत्स्वतन्त्रत्वे बोधः समुपजायते, तथापि पदार्थज्ञानलाभानन्तरं पदार्थज्ञानव्युत्पन्नानां मृत्तिका कः पदार्थः? ततो घटोत्पत्तिः केन प्रकारेणेति बोधवतां नैव विचिकित्सा मृत्तिकाघटयोरैक्ये। तथा तत्त्वज्ञानिनां जीवन्मुक्तानामनुभवे कारणब्रह्मकार्यब्रह्मणोऽभिन्नत्वेनैव विषयो भवतीति। यथा च श्रुतौः —

सर्वं ब्रह्ममयं प्रोक्तं सर्वं ब्रह्ममयं जगत्।
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम्।।
नित्यनिर्मलरुपात्मा स्यात्मनोऽन्यत्र किञ्चन।
अणुमात्रलसद्रुपमणुमात्रमिदं जगत्।।
अणुमात्रं शरीरं वा ह्यणुमात्रमसत्यकम्।
अणुमात्रमचिन्त्यं वा चिन्त्यं वा ह्यणुमात्रकम्।।
ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत् त्रयम्।
आनन्दं परमानन्दमृते किञ्चिन्न किञ्चन।।
चैतन्यमात्रमोंकारो ब्रह्मैव सकलं स्वयम्।
आत्मनोऽन्यत्तु सन्नास्ति सर्वमात्ममयं जगत्।।

ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्नहि।

ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च।।

ब्रह्मणोऽन्यस्तृणं नास्ति ब्रह्मणोऽन्यत् पदं नहि।।

कार्यसम्बन्धात् कार्य ब्रह्मेति व्याह्रियते। व्यक्तावस्थापन्नं परिदृश्यमानमेतज्जगदेव कार्य ब्रह्म। तत्त्वज्ञानां दृष्टौ तु कारणब्रह्मगताः सच्चिदानन्दभावाः कार्यब्रह्मण्यपि अनुस्यूताः प्रतीयन्ते। तत्रैतावानेव भेदो यत् सच्चिदानन्दात्मकभावत्रयस्य कारणब्रह्मण्यद्वैतरुपेण, कार्यब्रह्मणित्वविद्याप्रभावादनेकरुपेण तारतम्यात् उच्चावचप्रतीतिः। अतो भावमयस्य हेतुत्वेन कारणब्रह्मणि विद्यमानत्वात् तत् कार्यब्रह्मेति गीयते। स्थितिश्च तस्य भावत्रयस्य कारणब्रह्मणि समत्वेनाद्वैतरुपेण च। यद्यपि समष्टिदृष्ट्या कार्यब्रह्मण्यपि भावत्रयस्य तस्य तथैवाऽस्तित्व प्रतीतिः, परन्तु अविद्याप्रभावादद्वैतभावस्य व्यष्टिदृश्ये समत्वेन प्रतीयमानत्वाभावात् कारणब्रह्मणि कार्यब्रह्मणि च भेदप्रतीतिः। वस्तुतस्तु तत्त्वज्ञानदशायामज्ञानविनाशेनोभयत्रापि जीवन्मुक्ताः समत्वेनैव सच्चिदानन्दभावमनुभवन्ति।

ननु कार्यब्रह्मनियामिकायाः शक्तेः किं स्वरुपमित्यत्राह — धर्मस्य विश्वनियामकत्वा—द्भगवद्रुपत्वम्। विश्वस्य सृष्टिस्थितिलयानां यथावत् क्रमरक्षार्थं धर्म एव प्रधानं निदानम्। महाप्रलयानन्तरं कारणवारिणिब्रह्माण्डगोलकोत्पत्तिस्तत्र च ब्रह्मविष्णुमहेशानामाविर्भावेन विश्वसर्गस्ततश्च प्रजापतीनां मानसिकी सृष्टिस्तदनुजीवानां वैजी सृष्टिः। सर्वाणि चैतानि कर्माणि कारणवारिण्यन्तर्निहित समष्टिसंस्कारस्य धर्मशक्त्यैव सम्पाद्यन्ते। तदनन्तरं सृष्टिक्रियातः

प्रलयं यावत् तत् सुरक्षा ब्रह्माण्डपिण्डयोः स्थितिश्च धर्मेणैव सम्पाद्येते। तेनैव चाखिलेष्वपि ब्रह्माण्डसौरजगत्सु सूर्यस्य मध्याकर्षणम्, तत्रैव चाखिलग्रहोपग्रहाणां च सूर्यलोकेन सहाकर्षणविकर्षणशक्तिसमता च संसिध्यतः। सूर्यग्रहोपग्रहादिषु आकर्षणविकर्षण नाम्ना द्वे शक्ती विद्येते। यथाकर्षणशक्तेः प्राधान्येह्येकोग्रहो ग्रहान्तरे प्रविश्य विनश्येत्, तथैव विकर्षणशक्तेः प्राधान्ये ग्रहाः स्वस्वस्थानतश्च्युता विनाशमुपगच्छेयुः। तयोः साम्यं सम्पादयन्त्या धर्मशक्त्यैवाऽयं प्रभावो यन्नैवं कदापि जायते। ब्रह्माण्डस्य स्थितिक्रमो यथावत् यथानियमञ्च सततं संसरन्नेवास्ते। यथा समष्टिब्रह्माण्डे स्वधर्मरक्षावलेन ऋषयो देवताः पितरश्च ब्रह्माण्डं गोपायन्ति, तथैव व्यष्टिस्वरुपदेहपिण्डे जीवानां क्रमोन्नतिः, मुक्तिश्च धर्मेणैव सञ्जायेते। सृष्टिधर्ममनुसृत्य ब्रह्माण्डस्य प्रकृतिनियमतो जीवानाम्—उद्भिज्ज स्वेदजाण्डजादियोनितो जरायुजयोनिं यावत्, जरायुजेष्वपि समुन्नत पशुयोनितो मनुष्ययोनिपर्यन्तं समेधमाना क्रमोन्नतिः समष्टिसृष्टेः धर्मप्रभावादेव सम्पद्यते। धर्मस्य सत्त्वगुणवर्द्धकत्वात् जीवानां सदैव क्रमोन्नत्या सत्त्वगुण उत्तरोत्तरं विकासमापद्यते। मनुष्येष्वप्यन्त्यजशूद्र—वैश्य—क्षत्रिय—ब्राह्मण—कुटीचर—वहूदक—हंस—परमहंसादिस्वरुपतो जीवानां क्रमोन्नतिं सम्पादयतस्तस्य परमपुरुषार्थसाधकत्वम्। समष्टिव्यष्टिसृष्ट्योर्नियन्तृत्वात् धर्मस्य भगवत्स्वरुपत्वम्। कार्यब्रह्मरुपस्य जगतो भगवद्रुपत्वे तन्नियामकस्यापि तथात्वं स्पष्टमेवेति।

ब्रह्माण्डपिण्डधारक—धर्मप्रादुर्भावविज्ञानं यथा — स्थितिमूलकत्वात् तमोरजसोः साम्ये धर्मप्रादुर्भावो भवति। पूर्वमेव धर्मस्य सत्त्वमूलकत्वं सिद्धान्तितम्। अतस्तमोरजसी समत्वेन

ह्रासमुपगच्छत:, सत्त्वं च यदा प्रवर्द्धते तदैव सत्त्वमूलकस्य धर्मस्योदयो जायते। स्मर्यते च—

आकर्षणविशिष्टा या शक्ति: सा राजसी मता।
विकर्षणेन सम्पृक्ता शक्ति र्मे तामसी तथा।।
सामञ्जस्यं विकुर्वाणा तयो: शक्त्योर्द्वयोरिह।
सात्विकी सैव धर्मोऽस्ति शक्ति र्मे नाऽत्र संशय:।।

सम्प्रति धर्मपदार्थमुपसंहन्नाह: –

धर्मस्य स्थितिमूलकत्वात् तमोरजसो: साम्य एव तद्विकाशाद् ब्रह्माण्डधारकत्वम्। पूर्वव्याहृतविज्ञानत: परमाणुभारमय ब्रह्माण्डं यावद् अखिलमेव वस्तुजातं धर्मस्य नियन्त्र्या शक्यैव धार्यते। धर्मेणैव परमाणुद्वयसंयोगत: सर्गारम्भस्तद्रक्षा, पिण्डब्रह्माण्डयोर्यथावत् स्थिति: सर्वेषां प्राणिनां क्रमोन्नतिश्च सम्पादिता भवन्ति। स्मर्यते च –

ब्राह्मणा:! नयते नूनं सर्वलोक हितावह:।
ब्रह्माण्डपिण्डरुपाया: सृष्टे र्यो धारको महान्।।
मानवान् धर्म एवायं केवल्याभ्युदयप्रद:।
संरक्ष्याज्ञानभूमिभ्यो ज्ञानभूमिं निरन्तरम्।।
ददच्चाभ्युदयं सम्यक् सम्प्रापय्यान्तिमां क्रमात्।
ज्ञानभूमिं ततो दत्ते नि:श्रेयसमहो परम्।।

अहमेवास्मि धर्मस्य स्थितिस्थानं द्विजर्षभाः।
धर्माकृतिर्ममैवास्ति शक्तिरेव सनातनी।।
विराट्सृष्टेः प्रवाहस्य धारणं कृतवत्यहो।
परिव्याप्नोति धर्मस्य शक्तिरेषैव धारिका।।
परमाणूभ्य आनूनं पूर्णां ब्रह्माण्डविस्तृतिम्।
शक्तेः संधारिकाया मे धर्मस्यैव प्रभावतः।
सूर्येन्द्वादिग्रहा सर्वे तथा नक्षत्र मण्डलम्।।
उपग्रहादयोऽप्येवं विराड्देहे ममानिशम्।
स्व स्वकक्षामुपाश्रित्य भ्रमन्तेऽत्र समन्ततः।।
सृष्टेः रक्षां च कुर्वन्ति साहाय्यं ददतो मिथः।
दैवासुरेण युद्धेन दैव्याः सृष्टेः पवित्रताम्।।
सम्पादयन्ती धर्मस्य धारिका शक्तिरुत्तमा।
प्रतिष्ठपयते देवान् स्वस्वलोकेऽसुराँस्तथा।।
निश्चितं भ्रातृभावेन विज्ञाः धर्ममयेन मे।
प्रकृतेः पालिता जीवाः पोषिताश्च निरन्तरम्।।
उद्भिज्जात्स्वेदजं गत्वा स्वेदजादण्डजं तथा।
ततो गच्छन्त्यहो विप्राः! अण्डजाच्च जरायुजम्।।
जरायुजेषु क्रमशो मर्त्ययोनिं गताः पुनः।

भवन्ति मोक्षमार्गस्य नूनमेतेऽधिकारिणः।।

धारिका शक्तिरेवासौ धर्मस्य विप्रपुङ्गवाः।

क्रमादुन्नमयन्ती वै मानवानुत्तरोत्तरम्।।

कृत्वाऽधिकारिणो ज्ञानभूमेरन्ते च तानहो।

कैवल्यपदवीं तेभ्यः प्रददाति शनैः शनैः।।

सर्वेषां रक्षको धर्मः सर्वजीवहितप्रदः।

निखिलव्यापकश्चास्ति सर्वेभ्योऽभ्युदयप्रदः।।

## (२) धर्मभेदाः

विशेष–असाधारण–आपत्–साधारणभेदेन मानवधर्मश्चतुर्विधो विज्ञेयः। यस्या साधारण्या शक्त्योद्भिज्जादेः सहजपिण्डसमूहस्य कोटिग्रहोपग्रहपरिपूर्णस्यानन्तब्रह्माण्डसंघस्य सुरक्षणम् च भवति। तस्य विश्वविधारकधर्मस्य विज्ञानवर्णनं पूर्वं विधाय साम्प्रतं ननु पिण्डोपयोगिधर्मं प्रकटीक्रियते। यथाः —

तत् सनातनधर्मस्य पादाश्चत्वार भासते।

साधारणविशेषौ हि तथाऽसाधारणापदौ।।

इति स्मरणात् विशेषधर्मोऽसाधारणधर्म आपद् धर्मः साधारणधर्मश्चेति चतुर्धा विभक्तो मानवधर्म इति।

"अधिकारप्राधान्यहेतुको विशेषधर्मः।।[1]"

अधिकारस्य प्राधान्यं, तदेव हेतुर्यस्य स अधिकारप्राधान्यमूलक इति यावत् विशेष–धर्मोऽवगन्तव्यः। यो हि अधिकारिविशेषमधिकृत्य निर्णीयतेऽसौ विशेषधर्म इति भावः। आर्यधर्मोऽनार्यधर्मश्च विशेषधर्मौ, वर्णाश्रमधर्मस्य लोकत्रयपवित्रकर आचारसमूहो विशेष–धर्मविज्ञानमनुसृत्यैव निर्दिष्टः, पुरुषधर्मो नारीधर्मः प्रवृत्तिधर्मो–निवृत्तिधर्मो–राजधर्मः–प्रजा–धर्मश्चेत्यादयो विशेषधर्म एवान्तर्भवन्ति। स्मर्यते चात्र –

ब्रह्मचर्यं च दाम्पत्यं निवासो निर्जने वने।
त्यागो ह्यध्यापनञ्चैव याजनञ्च प्रतिग्रहः।।
धर्मयुद्धं प्रजारक्षा वाणिज्यं सेवनादयः।
विशेषस्यापि धर्मस्य सन्तीमाः खलु वृत्तयः।।

तत्तदधिकारिव्यतिरिक्तानामनुष्ठानायोग्यत्वात् सार्वजनिकहिताधायको न भवति विशेष–धर्मः। यथा हि कामिनीकाञ्चनात्यन्तराहित्यरुपः संन्यासधर्मो गृहस्थकृतेऽधर्मः, एवं गृहस्थ–धर्मोऽपि संन्यासिकृते तथैवेति निर्गलितोऽर्थः।

**सम्प्रति द्वितीयमसाधारणं धर्मं वर्णयति**

**शक्तिप्राधान्यनिमित्तोऽसाधारण[2] धर्मः ।**

असाधारणधर्मो हि धार्मिकशक्तिप्राधान्यकारणको भवति। शक्तेः प्राधान्यं निमित्तं

---

१. *कर्ममीमांसादर्शन, धर्मपाद सूत्र २३*
२. *कर्ममीमांसादर्शन, धर्मपाद सूत्र २४*

यस्य स इत्यर्थः। अत्र तु पूर्वजन्मसंस्कारोऽसाधारणतपोयोगबलादीनि वा निदानम्। अतो व्यक्तिविशेष एवाधिकारी भवत्यसाधारणधर्मस्य।

यदा कश्चिद् विशेषस्तु धर्मः शक्तिमवाप्नुयात्।

अधिकां भावसंशुद्ध्यां कोटिं साधारणस्य सः।।

असाधारणधर्मस्याधिकारं लभते वहन्।।

इति स्मरणात्। विशेषतो ह्यसाधारणधर्मे दैवशक्तेरावश्यकत्वमभ्युपगन्तव्यम्। यथा च महर्षिविश्वामित्रस्यासाधारणतपः प्रभावेण तस्मिन्नेव जन्मनि क्षत्रियत्वमपहाय ब्राह्मणत्वा—धिगमो द्रौपद्याः पञ्चपतित्वेऽपि महामहिममनोबलेन स्वसतीत्वसंरक्षणम् नन्दी—कुन्ती—गण्डकीप्रभृतयश्चाप्यत्रोदाहृताश्चेति।

तृतीयमापद्धर्मं दर्शयति

आपन्मूलक आपद्धर्मः[1]

आपद्धर्मो हि विपत्तिमूलको भवति। स चापद्येव विधीयते। अत्र भावशुद्धिमुद्दिश्या—धर्मकार्यमपि धर्मकार्यवद्विधेयत्वेन प्रतिपादितम्। स्मृतौ यया: —

आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः।

स नाप्नोति फलं तस्य परत्रेति विचारितम्।।

देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि।

---

१. कर्ममीमांसादर्शन, धर्मपाद सूत्र २५

रक्षेदेव स्वदेहं वै पश्चाद्धर्मं समाचरेद्।।

आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत्।

स्वयं समुद्धरेत् पश्चात् स्वस्थ्ये धर्मं समाचरेत्।।

**ब्राह्मणोपात्तां शङ्कां समाधत्ते –**

**"तत्राऽधर्मोऽपि धर्मो भावशुद्धेः[१]"**

आपद्धर्मो हि वाह्यरुपेणाधर्मवत् प्रतीयते। ननु अधर्मप्रतीतिजनकापद्धर्मस्य कथं धर्मसंज्ञकत्वमिति चेन्नैवं, धर्मो हि भावशुद्धिमयेक्षते, तदानीञ्च तस्या जागरुकत्वान्न काऽप्यनुपपत्तिः। तदेव समाहितं महर्षिणा जैमिनिना। स्मर्यतेऽप्यत्र –

## चतुर्थं साधारणधर्मं विविनक्ति

**"सर्वकल्याणसाधकः साधारणधर्मः[२]"**

साधारणधर्मः सर्वेषां कल्याणकारको भवति। स हि उक्तलक्षणस्य मनुष्यधर्मस्य चतुर्षु भेदेषु अन्तिमो मानवमात्रहितधायक इति भावः। स्मृतावस्य –

"धीर्विद्या सत्यमक्रोध औदार्यं समदर्शिता।

परोपकार–निष्कामभावप्रभृतयः शुभाः।।

साधारणस्य धर्मस्य विद्यन्ते वृत्तयो ध्रुवम्।"

---

१. *कर्ममीमांसादर्शन, धर्मपाद सूत्र २६*
२. *कर्ममीमांसादर्शन, धर्मपाद सूत्र २८*

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।

धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।[1] इति।।"

एष साधारणधर्मे सर्वैरेवोच्चावचाधिकारनिरतैरार्याऽनार्यस्त्रीपुरुषसंन्यासिप्रभृतिभिः निर्विशेषं निर्वाधमनुष्ठेय इति।

## (३) धर्मोपयोगिता

प्रसङ्गतो धर्ममाहात्म्यं धर्मोपयोगिताञ्चाख्यातिः —

"सर्वशक्त्याश्रयो धर्मः कार्यकारणभावात्।।[2]"

त्रिगुणात्मिकया प्रकृत्या सृष्टिस्थितिलयात्मिकायाः क्रियायाः अभ्युदयनिःश्रेयससम्प्रदात्र्या क्रियया धर्मस्य च कार्यकारणभावात्मक—सम्बन्धसत्त्वात् धर्मस्य सर्वशक्तिशालित्वम्। धर्मेण जीवा अभ्युदय निःश्रेयसभाजो भवन्तीति धर्मः क्रियाविशेष—सम्बन्धवान्, त्रिगुणात्मिका प्रकृतिस्तु परिणामित्वात् कर्मणां जनयित्री। इत्येवं धर्मः सर्वासामेव स्थितिमतीनामुन्नतिशीलानाञ्च शक्तीनामाश्रयः। अतो हि धर्मेण जगतां स्थितिः, तेनैव च जीवानामभ्युदय निःश्रेयसावपि सिध्यत इति।

### एतस्य वैज्ञानिकं रहस्यमुपवर्णयति

"प्रकृतेः सर्वशक्तिमत्वात्।[3]"

---

१. *मनुस्मृतिः*

२. *कर्ममीमांसादर्शन धर्मपाद सूत्र ७४*

३. *कर्ममीमांसादर्शन धर्मपादसूत्र ७५*

ब्रह्मशक्तिरुपिण्या मूलप्रकृतेः सर्वशक्तिमत्वे सर्वेषामेव शास्त्रकाराणामैकमत्यम्। अनन्तकोटिब्रह्माण्डप्रसूः ब्रह्माण्डपिण्डात्मिका जगद्धात्री जगज्जननी सृष्टिस्थितिप्रलयकारिणी ब्रह्मशक्तिः सर्वासामेव शक्तीनामाश्रयभूतेत्यत्रनास्ति प्रमाणविज्ञानयोरपेक्षा। एवञ्च धर्मस्यापि तस्या एव ब्रह्मशक्तेः प्रकृतेर्नियमरुपत्वात् तया सह कार्यकारणभावात्मक–सम्बन्धाश्रयत्वाच्च तस्यास्तत् सर्वशक्तिमत्वं तत्र विश्वधारके धर्मेऽपि सुस्पष्टमेव।

विशेषधर्मप्रसङ्गेन जातिधर्मं निर्णयति

"प्रकृतिमूलो जातिधर्मः[१]"

प्रकृतिमूलं यस्य प्रकृतिहेतुक इति यावत् एवम्भूतो जातिधर्मो ज्ञेयः। वर्णधर्मेण साक्षात् सम्बन्धवानयं विशेष–धर्मरुपो जातिधर्मः प्रकृतिगतो विज्ञेयः। प्रथम एव परिणामे त्रिगुणात्मिकायाः प्रकृतेर्गुणपरिणामक्रमतो जातिवर्गः परिणमते। तत्र चत्वारो विभागाः स्वभावसिद्धाः। यथा ऊर्ध्वगाः सत्त्वप्रधाना अधोगास्तमः प्रधाना मध्यमस्था हि सत्त्वरजः प्रधाना रजस्तमःप्रधानाश्चेति। रजोगुणस्योभय सहायकत्वात् प्रकृतिसाम्राज्यीयचेतनवर्गे चतुर्णामेषां विभागानां स्थितिः स्वाभाविकी। एवमेव सर्वत्रैव स्वेदजाण्डज–जरायुजादि चतुर्विधभूतसंघेषु चतसृणां श्रेणीनामुपलब्धिर्दृश्यते – श्रुतिस्मृतिषु बहुधा प्रपञ्चितोऽयं विषयः।

प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीततमाग्निर्देवता अन्वसृजत ब्राह्मणो मनुष्याणोमजः पशूनां तस्यात्ते मुख्याः – बाहूनां पञ्चादशं निरमिमीत तमिन्द्रो

---

१. *कर्ममीमांसादर्शन, धर्मपाद सूत्र ७६*

देवता अन्वसृजत राजन्यो मनुष्याणामविः पशूनां तस्यान्ते वीर्यवन्तो ...... मध्यतः सप्तदशं निरामिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त वैश्यो मनुष्याणां गावः पशूनां... सोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त ......... शूद्रो मनुष्याणामश्वः पशूनाम्।

लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत्।
दृढाङ्गं लघु यत् काष्ठमघटं क्षत्रजाति तत्।।
कोमलं गुरु यत् काष्ठं वैश्यजातिस्तदुच्यते।
दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति र्निगद्यते।।
लक्षणद्वयभेदेन द्विजातिः काष्ठसंग्रहः।।

**एतद्विज्ञानं स्पष्टयति –**

**"तस्माद् वर्णधर्मस्तथा[1]"**

सत्त्वादिगुणत्रयस्य पूर्वोक्तस्वाभाविक चतुःश्रेण्यनुसारं मनुष्येषु ब्राह्मण–क्षत्रिय–वैश्य–शूद्रभेदेन चत्वारो वर्णाः प्राकृतिकाः स्वभावसिद्धा इत्यर्थः।

ननु यदि वर्णधर्मविभागो नैसर्गिकस्तदा सर्वत्रैव देशेषु मनुष्याणां सामाजिकव्यवस्थायां कथन्न वर्णधर्मस्य सामञ्जस्यं विकासश्चाऽवलोक्यते? अत्रोच्यते – मानवानां पूर्णावयवजीवत्वेन स्वधर्मभ्रंशनशक्तिमत्वस्यापि सत्त्वात् तत्रैव धर्माधर्माधिकारनियमनमुपलभ्यते नान्ययोनिगेषु जीवेषु। स्मृतिशास्त्रेऽप्येवमुक्तम् –

---

१. कर्ममीमांसादर्शन धर्मपादसूत्रम् ७८

मनुष्येषु महाराजः धर्माधर्मौ प्रवर्ततः।

न तथान्येषु भूतेषु मनुष्यरहितेष्विह।।

अत एवादिसर्गे सर्वे ब्राह्मणा एवोद्भवन्ति। पुनश्च ये तत्र स्वब्राह्मणभावेन पतित–समाजसङ्घं वर्णधर्मदुर्गेण सुगोपायन्ति त आर्या एवेह तिष्ठन्ति। ये च सर्वथा त्यक्तवर्णाश्रमाचाराः स्वच्छन्दतो भ्रष्टाचारा भूत्वा कामचारा भवन्ति त एवानार्य्या गण्यन्ते। स्मृतिषु यथा –

असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्।

आत्मतेजोभिर्निर्वृत्तान् भास्कराग्नि समप्रभान्।।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।

ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्।।

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसा।

त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षमतां गताः।।

गोभ्यो वृत्तिं समास्थाय पीताः ऋष्युपजीविनः।

स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः।।

हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः।

कृष्णाः शौच परिभ्रष्टास्ते द्विजाः शूद्रतां गताः।।

एतदेव पुनर्द्रढयतिः —

"सङ्करोऽश्वतरवत्[1]"

आदिसर्गे मानवानां यो वर्णधर्मो निर्णीतस्तत्र यदि साङ्कर्यदोष आपतेत्तदा अश्वतरवंशोच्छेद इव मनुष्याणां मनुष्यत्वविनाश एव सम्पद्येत। वर्णधर्मस्य प्राकृतिकत्वात् सृष्टेरादित एव तस्य सत्तेति दार्शनिकविज्ञानतो वेदशास्त्रादितोऽपि सिध्यति। अनन्तरञ्च यो हि मनुष्यसमाजो रजोवीर्यशुद्ध्या स्ववर्णधर्मं सुगोपायति स तु कल्पान्तं स्वसत्तां मानवमर्यादाञ्च स्थापयति। यो हि स्वस्वातन्त्र्यं स्वाधिकारञ्चापालयन् वर्णधर्मं भ्रंशयन् रजोवीर्यशुद्धिं विनाशयति सोऽश्वतरवत् मानवीं सृष्टिमेवोन्मूलयति। यथा — अश्वतरस्याग्रे वंशवृद्धिर्न जायते तद्वदेव वर्णधर्मविरहितो मानवसमाजोऽनार्य्यो भूत्वा कालान्तरे च धर्मविमुखोऽसभ्यो भवन् महाकालगर्भे विलीनः स्ववंशोच्छेदमेवाश्रयति।

शङ्कासमाधानाभ्यामेतदीयं विज्ञानं द्रढयति :

"तदुन्नतिर्विशिष्टसंयोगि वृक्षवत्[2]"

तस्य सङ्करस्योन्नतिरभ्युदयो विशिष्टाश्च ते संयोगिवृक्षास्तद्वत्। ननु वर्णाश्रमधर्म—मर्यादाविरहितेष्वप्यनार्य्येषु धनवृद्धिविधानत्वादिभिरभ्युदयो दृश्यते, तत्र को हेतुरिति शङ्कां समाधातुमेवास्य सूत्रस्याविर्भावो महर्षिणा जैमिनिना कृता। तथाहि आम्रादिवृक्षेषु संयोगि—

१. *कर्ममीमांसादर्शन, धर्मपादसूत्र ७८*

२. *कर्ममीमांसादर्शन, धर्मपादसूत्र ७९*

वृक्षाणाम्रादीनि फलानि वृहन्ति सुस्वादूनि च भवन्ति, परन्तु ते तरवो न चिरस्थायिनी नापि तेषां वीजेनाग्रे वृक्षसृष्टिपरम्परा: सम्पद्यन्ते। यतो हि संयोगिवृक्षाणां बीजवापेन जायमाने वृक्षे न तादृशानि पीवराणि महान्ति वा फलान्युद्भवन्ति। प्रत्युत् क्रमशरास्तेषां सृष्टिपरम्परोत्तरोत्तरं क्षीयमाणा विलीयत एव। तथैवानार्य्यजातीनां साङ्करी सृष्टि: कियत्कालं यावत् स्वीयं विशेष चमत्काराभ्युदयं दर्शयन्नपि अवसानेऽधोगतिमुपगता प्रकृतिगर्भे विलीना नष्ट—भ्रष्टैव भाविनीति निश्चप्रचम्।

प्रत्यक्षत् एव विज्ञानं प्रमाणयति —

"तथा सर्वत्र दर्शनात्[१]"

भौगोलिकेतिहासनिरीक्षणतोऽपि पुष्यतितरामिदं विज्ञानम्। यस्मिन् वंशे साङ्करी प्रजा जायते तस्योच्छित्तिरावश्यकी। यतो हि नित्यपितृगणा नैतादृशं वंशं संरक्षितुं कृतयत्ना भवन्ति। अत एव पृथिव्या अनादिकालत एव वर्णाश्रमधर्मव्यवस्था विरहिता असंख्याता जातय: समुत्पन्ना:, परन्तु ता: सर्वा अपि वर्णाश्रममर्यादा—विरहिता: सङ्कर्य्यो भूत्वा महाकालसमुद्रे निमग्ना नामशेषा न श्रूयन्ते। निश्चितमिदं यत् वर्णाश्रमधर्मविहीना कापि मनुष्यजाति र्नेह पृथिवीतले चिरस्यायिनी नापि नियमतोऽभ्युदयं विन्दमाना नि:श्रेय—साधिकारिणी। अत एव गीतायामुक्तम् —

---

१. *कर्ममीमांसादर्शन, धर्मपादसूत्र ८०*

"उत्सन्न कुलधर्माणां मनुष्याणां जनार्दन!।

नरकेऽनियतं वासो भवतीत्यनुशुश्रुम:।।[१]"

तस्य धर्मस्याष्टौ उपयोगिता उपकाराश्च स्मृतिशास्त्रे प्रतिपादिता: सन्ति। तथाहि —

आर्यजाते वीर्यरक्षाऽध्यात्मिकी च क्रमोन्नति:।

पितृणां वद्‌र्धनाऽनल्पा तत्कृपा—प्राप्तिरेव च।।

सहोच्चैर्देवलोकैश्च सम्बन्धस्थापनं भृशम्।

विवुधान्तं प्रसादश्च विश्वमङ्गल साधक:।।

तथा स्वभावसंसिद्धसंस्कारोदयसाधनम्।

वीजरक्षाऽऽत्मबोधस्य कैवल्याधिगमोऽपि च।

वर्णाश्रमाणां धर्मणामष्टावेतानि मुख्यत:।।

अन्यच्च —

"उपकाराऽनन्त्यम्[२]"

स्थूल—सूक्ष्म—राज्य—संरक्षणातिरिक्ता अन्या अप्युपयोगिता वर्णाश्रमधर्मतोऽनन्ता उपकाराश्च संमुद्भवन्ति। सृष्टिप्रपञ्चानां स्थूलदैवराज्यरुपविभागद्वयान्तर्गतत्वात् सर्वेषामेव विषयाणां तत्सम्बन्धत्वात् सर्वेऽप्युपकारा सर्वा अप्युपायोगिता पूर्व कथितोपकाराद्वयान्तर्गता

---

१. गीता अध्याय १, श्लोक ४४

२. कर्ममीमांसादर्शन, धर्मपाद सूत्र १३

एव भवन्ति। तथापि मानवानां सर्वेऽप्यभ्युदया अपेक्षिता पदार्थाः वर्णाश्रमधर्मत सिध्यन्ति इति सूत्रेणानेनानन्तशब्दतः संसूच्यन्ते। तथाहि दैवराज्ये ऋषीणां देवानां नित्यपितृगणानाञ्च सम्वर्द्धनम्, परलोकगतानां नारकीयाणां जीवान्नमुद्धारः, असुराणां बलह्रासः, देवानां बलवृद्धौ साहाय्यसम्पादनम्, आत्मज्ञानपरम्पराया मृत्युलोकतोऽनुच्छेदः, मनुष्यजातौ च यथाधिकार यथाक्रमञ्च कामार्थधर्ममोक्षाणां सम्प्रदानम्, प्रवृत्ति–निवृत्ति धर्मशृङ्खलायाश्चिराय सङ्गोपनम्, त्रिलोकी पावनस्य सर्वतोधर्मस्य वीजानुच्छित्तिः, मानवसमाजे विद्या–वुद्धि–धन–जन–संघ–शक्ति बल सम्वर्द्धनम्, उन्नताभ्यश्चार्य्यजातिभ्यो रजोवीर्यशुद्धिमर्यादायाः स्थिरीकरणम्, आर्य्यजातेश्चाऽऽकल्पं दृढीकरणं नित्याद्युपयोगिता वर्णाश्रमधर्मता एवोपलभ्यन्ते।

तथाहि – कोऽप्यधिकारी साधारणधर्मानुष्ठानप्रभावतोऽभ्युदयमधिगच्छन्निःश्रेय–समधिगन्तुमधिकारितामधिगच्छति। एवं विशेष धर्मोऽपि स्वाधिकारिणं यथावत् स्वानुष्ठातार–मैहिकपारलौकिकाभ्युदयमुपप्रयच्छन् क्रमशोऽवश्यं निःश्रेयसमर्पयति। अत एवोभयोरेव सार्वजनिकोपकारिता समानशक्तिमत्ता विशेषोपयोगिता च बोद्धव्येत्यलम्।

## (४) श्रीमद्भागवतानुसारं धर्मफलम्

श्रीमद्भागवतस्य प्रथमेऽध्याये ऋषिभिः षट् प्रश्नाः कृताः। तद्यथा –

किं श्रेयः? शास्त्रसारः कः? स्थावतार प्रयोजनम्।
किं कर्म? केऽवताराश्च? धर्मः कं शरणं गतः।।
इत्येते सूतमुद्दिश्य षट् प्रश्ना मुनिभिः कृताः।।

एषां प्रश्नानामुत्तराणि सप्रसङ्गं श्रीमद्भागवतस्य प्रथमस्कन्धस्य द्वितीयेऽध्याये दत्तानि। सूतो मुनीनां गुरुं शुकं प्रणम्य नरं नारायणं देवीं सरस्वतीं व्यासं च नमस्कृत्य जयति संसारमनेनेति जयोभारतादि ग्रन्थः।[1] अत्र क्त्वाप्रत्ययेनैवाऽऽनन्तर्येसिद्धे तत् इति वक्तुर्विशेषणं कार्यम्। तन्मते विस्तार्यते ग्रन्थोऽनेनेति ततो वक्ता। तनोतेर्निष्ठान्तं रुपम् इति निर्दिश्य वदति– हे मुनयो लोकमङ्गलं यथा भवति तथाऽहं भवद्भिः पृष्टः। यत् यस्मात् श्रीकृष्णविषयकः सम्यक् प्रश्नः श्रीमद्भिः कृता येन प्रश्नेन मनः सम्यगानन्दी भवति। पुरुषाणां स एव परमो धर्मो विद्यते यस्माद् धर्मात् भगवति श्रीकृष्णे निष्कामा निर्विघ्नाभक्ति जायते। यया भक्त्या जनानां मनो सुप्रसन्नं भवति। भगवति वासुदेवे कृतो भक्तिसम्बन्धो आशु साधनानुसारेण शीघ्रमेव अहैतुकं अनुमानादितर्करहितं यत् ज्ञानं आत्मसाक्षात्रुपं तदुत्पादयति वैराग्यं सांसारिकविषयतोवैराग्यमपि जनयति। पुंसामत्र कर्तरि षष्ठी पुंभिरिति भावः। सुष्ठु अनुष्ठितोऽत्र सुशब्दः श्रद्धाद्योतनार्थः। धर्मो विष्वक् सर्वतो व्याप्ता आत्मशक्तिलक्षणा पार्षदलक्षणा सेना यस्य तस्य कथासु यदि अनुरागं नोत्पादयति तर्हि धर्मे प्रयासमात्रमेव न किमपि तदनुष्ठानस्य फलमिति भावः। यतो हि – अपवर्ग प्रयोजनीभूतस्य धर्मस्यार्थः भोग्यपदार्थः स्वर्गादिरर्थाय फलायफा भवति। तथा च धर्मैकप्रयोजनस्य धनस्य कामो विषयभोगः फलाय नास्ति। पुनश्च कामस्येन्द्रियप्रीतिर्लभः फलं नास्ति किन्तर्हि तावता कामेन जीवेत जीविका

---

*१. अष्टादशपुराणानि रामस्य चरितं तथा।*
*जयेति नामचैतेषां प्रवदन्ति मनीषिणः।।* — *भविष्यपुराणम्।*

निर्वाहो भवेत् तावता कामेन लाभो वर्तते। पुनश्च कर्मभिः कृत्वा यो जीवेत् तदिह संसारे अर्थः प्रयोजनं नास्ति। किन्तर्हि — जीवस्य तत्त्वजिज्ञासैव प्रयोजनमस्ति। यद् अद्वयं ज्ञानं तत् तत्त्वं तत्त्वविदो वदन्ति। तत् तत्त्वं किमस्ति? तत् तत्त्वं ब्रह्म इति, परमात्मा, इति भगवान् इति शब्दतः कथ्यते। तत् तत्त्वं आत्मानं श्रीकृष्णस्वरुपं मुनयो हृदये पुराणादिश्रवणेन लब्धया भक्त्या पश्यन्ति। अस्मात् कारणात् वर्णाश्रमस्थैर्जनै सभ्यगनुष्ठित्तस्य धर्मस्य फलं हरितोषणमेवास्ति। अस्मात् निश्चलेन मनसा यदूनां पतिर्भगवान् श्रीकृष्णः नित्यं पुराणादि कथामाध्यमेन श्रवणीयः नित्यं कीर्तनीयः, नित्यं ध्यातव्यः, नित्यं पूजनीयश्च। यस्य भगवतः श्रीकृष्णस्यानु निरन्तरं ध्यानमेव खड्गस्तेन युक्ताः कोविदा ग्रन्थिरहङ्कारस्तेन दृढीकरोतीत्येवं भूतं कर्म छिन्दन्ति, एवं भूतगुणोहरिरत एव तस्य कथायां रतिं को नु कुर्यात्? कुर्यदिवेति भावः। यतो हि पुण्यतीर्थं गङ्गादिस्तस्य नियमेन सेवनं तस्मात् महतां सेवोत्पद्यते तया सेवया जनो श्रद्धावान् भवति श्रद्धालोर्जनस्य भगवत्कथां श्रोतुमिच्छा जायते श्रवणेच्छोर्जनस्य वासुदेवकथायां रुचिर्भवति। स्वकथां शृण्घतां जनानां हृदये विराजमानो भगवान् कामादिवासना नाशयति। नष्टासु कामवासनासु निरन्तरं भागवतपुराणश्रवणेन भगवद्भक्तानां वा सेवया श्रीकृष्णे निश्चला भक्तिर्जायते। ततो कामलोभदिभिर्रहितं चेतः सत्त्वे स्थितं सत् प्रसीदति। ततो भगवद्भक्तियोगतो प्रसन्नचित्तस्य विषयेष्वनासक्तस्य भगवत्तत्वस्यानुभवो जायते। हृदये भगवति प्राकट्ये जनस्याहङ्कारोभिद्यते सर्वसंशयाः नश्यन्ति। कर्माणि च क्षीयन्ते। अतो विज्ञाः परमानन्देन श्रीकृष्णे मनः संशोधिनीं दिव्यां भक्तिं नित्यं

कुर्वन्ति। धर्मस्तु श्रीकृष्णप्रतिपादकः। इदमेव श्रीमद्भागवतानुसारं धर्मफलमस्ति।[1]



---

१. मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्। यत्कृतः कृष्णसम्प्रश्नो येनात्मा सम्प्रसीदति।।
स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे। अहैतुक्यप्रतिहता ययाऽऽत्मा सुप्रसीदति।।
वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैरागयं ज्ञानं यत्तदहैतुकम्।
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः। नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्।।
धर्मस्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते। नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः।।
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता। जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः।।
वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।।
तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया। पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया।।
अतः पुम्भिर्द्विज श्रेष्ठा वर्णाश्रमविभागशः। स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्।।
तस्मादेकेन मनसा भगवान् सात्त्वतांपतिः। श्रोतव्यः कीर्तितव्यश्चध्येयः पूज्यश्च नित्यदा।।
यदनुध्यासिना युक्ताःकर्मग्रन्थिनिबन्धनम्। छिन्दन्ति कोविदास्तस्य कोनुकुर्यात्कथारतिम्।।
शुश्रुषो श्रद्दधानस्य वासुदेवकथारुचिः। स्यान्महत्सेवया विप्राः पुण्यतीर्थ निषेवणात्।।
शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः। हृद्यन्तस्थो ह्यभद्राणि विधुनोतिसुहृत्सताम्।।
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया। भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी।।
तदा रजस्तमोभावाः कामलोभादयश्च ये। चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति।।
एवं प्रसन्नमनसो भगवद्भक्तियोगतः। भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते।।
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे।।
अतो वै कवयो नित्यं भक्तिं परमया मुदा। वासुदेवे भगवति कुर्वन्त्यात्मप्रसादिनीम्।।

— श्रीमद्भागवतं द्वितीयस्कन्धे, द्वितीयोऽध्याये, श्लोक ४—२२

# द्वितीयोऽध्याय:

१. वर्णधर्म:
२. आश्रमधर्म:
३. यतिधर्म:
४. भागवतधर्म:

# द्वितीयोऽध्यायः

## (१) वर्णधर्मः

एतद्विज्ञानं स्पष्टयति –

"तस्माद्वर्णधर्मस्तथा।[१]"

सत्त्वादिगुणत्रयस्य पूर्वोक्तस्वाभाविक चतुःश्रेण्यनुसारं मनुष्येषु ब्राह्मण–क्षत्रिय–वैश्य–शूद्रभेदेन चत्वारो वर्णाः प्राकृतिकाः स्वाभावसिद्धा इत्यर्थः।

ननु यदि वर्णधर्मविभागो नैसर्गिकस्तदा सर्वत्रैव देशेषु मनुष्याणां सामाजिकव्यवस्थायां कथन्न वर्णधर्मस्य सामञ्जस्यं विकासश्चाऽवलोकयते? अत्रोच्यते – मानवानां पूर्णावयव–जीवत्वेन स्वधर्मभ्रंशनशक्तिमत्वस्यापि सत्त्वात् तत्रैव धर्माधर्माधिकारनियमनमुपलभ्यते नान्ययोनिषु जीवेषु। स्मृतिशास्त्रेऽप्येवमेवोक्तम् –

मनुष्येषु महाराज! धर्माधर्मौ प्रवर्ततः।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह।।

अत्र एवादिसर्गे सर्वे ब्राह्मणा एवोद्भवन्ति। पुनश्च ये तत्र स्वब्राह्मभावेन पतितसमाजसङ्घं वर्णधर्मदुर्गेण सुगोपायन्ति ते आर्य्या एवेह तिष्ठन्ति। ये च सर्वथा त्यक्तवर्णाश्रमाचाराः स्वच्छतो भ्रष्टाचारा भूत्वा कामाचारा भवन्ति ते एवानार्य्या गण्यन्ते। यथा स्मृतिषु –

---

१. कर्ममीमांसादर्शने, धर्मपादेसूत्रम् ७७

असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्।
आत्मतेजोभिर्निर्वृत्तान् भास्कराग्निसमप्रभान्।।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्।।

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः।।

गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः।।

हिंसाऽनृतप्रिया लुब्धा सर्वकर्मोपजीविनः।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः।।

एतदेव पुनर्द्रढयतिः —

"सङ्करोऽश्वतरवत्[१]"

आदिसर्गे मानवानां यो वर्णधर्मो निर्णीतस्तत्र यदि साङ्कर्यदोष आपतेत्तदा अश्व— तरवंशोच्छेद इव मनुष्याणां मनुष्यत्वविनाश एव सम्पद्येत्। वर्णधर्मस्य प्राकृतिकत्वात् सृष्टेरादित एव तस्य सत्तेति दार्शनिकविज्ञानतो देशशास्त्रादितोऽपि सिध्यति। अनन्तरञ्च यो हि मनुष्यसमाजो रजोवीर्यशुद्ध्या स्ववर्णधर्मंसुगोपायति स तु कल्पान्तं स्वसत्तां मानवमर्यादाञ्च स्थापयति। यो हि स्वस्वातन्त्र्यं स्वाधिकारञ्चापालयन् वर्णधर्मं भ्रंशयन्, रजोवीर्यशुद्धिं विनाशयति सोऽश्वतरवत् भाविनीं सृष्टिमेवोन्मूलयति। यथा अश्वतरस्याग्रे वंशवृद्धिर्न जायते तद्वदेव वर्णधर्मविरहितो मानवसमाजोऽनार्य्यो भूत्वा कालान्तरे च धर्मविमुखोऽसभ्यो भवन् महाकालगर्भे विलीनः स्ववंशोच्छेदमेवाश्रयति।

---

१. धर्ममीमांसादर्शने, धर्मपादेसूत्रम् ७८

शङ्कासमानाभ्यां एतदीयं विज्ञानं द्रढयति :

"तदुन्नतिर्विशिष्टसंयोगिवृक्षवत्[१]"

तस्य संकरस्य उन्नतिरभ्युदयो विशिष्टाश्च ते संयोगिनो वृक्षास्तद्वत्। ननु वर्णाश्रम–धर्ममर्यादा विरहितेष्वनार्य्येषु धनवुद्धिविद्यावलादिभिरभ्युदयो दृश्यते तत्र को हेतुरिति शङ्कां समाधातुमेवास्य सूत्रस्योद्भवः। तथाहि – आम्रादिवृक्षेषु संयोगिवृक्षाणामाम्रादीनि फलानि वृहन्ति सुस्वादूनि च भवन्ति, परन्तु ते तरवो न चिरस्थायिनो नापि तेषां बीजेनाग्रे वृक्ष–सृष्टिपरम्पराः सम्पद्यन्ते। यतोहि संयोगिवृक्षाणां वीजवापेन जायमाने वृक्षे न तादृशानि पीवराणि महान्ति वा फलान्युद्भवन्ति। प्रत्युत् क्रमशस्तेषां सृष्टिपरम्परोत्तरोत्तरं क्षीयमाणा विलीयत एव। तथैवानार्य्यजातीनां साङ्करी सृष्टिः कियत् कालं यावत् स्वीयं विशेष–चमत्काराभ्युदयं दर्शयन्त्यपि अवसानेऽधोगतिमुपगता प्रकृतिगर्भे विलीना नष्ट–भ्रष्टैव भाविनीति निश्चप्रचम्।

प्रत्यक्षत एवेदं विज्ञानं प्रमाणयति

"तथा सर्वत्र दर्शनात्[२]"

भौगोलिकेतिहासनिरीक्षणतोऽपि पुष्यतितरामिदं विज्ञानम्। यस्मिन् वंशे साङ्करी प्रजा जायते तस्योच्छित्तिरावश्यकी। यतो हि 'नित्यपितृगणा नैतादृशं वंशं संरक्षितुं कृतयत्ना भवन्ति। अतएव पृथिव्या अनादिकालात् एव वर्णाश्रमधर्मव्यवस्थाविरहिता असंख्याता जातयः समुत्पन्नाः, परन्तु ताः सर्वा अतोपि वर्णाश्रममर्यादा–विरहिताः सङ्कर्य्यो भूत्वा

१. कर्ममीमांसादर्शने धर्मपंदे सूत्रम् ७९
२. कर्ममीमांसादर्शने कर्मपादे सूत्रम् ८०

महाकालसमुद्रे निमग्ना नामशेषा न श्रूयन्ते। निश्चितमिदं यत् वर्णाश्रमधर्मविहीना कापि मनुष्यजातिर्नेह पृथिवीतले चिरस्थायिनी नापि नियमतोऽभ्युदयं विन्दमाना निःश्रेयसाधिकारिणीति।

वर्णधर्मप्रयोजनं प्रतिपाद्य वर्णशुद्धेरुपायमाहः —

"त्रिभावतो वर्णशुद्धिः[१]"

अध्यात्माधिदैविकाधिभौतिकात्मिक भावत्रयाऽवलम्बनतो वर्णधर्मस्य शुद्धिर्भवतीति भावः। तत्र ज्ञानेनाध्यात्मभावस्य कर्मणाधिदेवभावस्य, मातृपितृरजोवीर्य्यसाहाय्येन चाधिभौतिकभावस्य सुरक्षेति। विना ज्ञानेनात्मनो नावरणोच्छेद इति ज्ञानमाध्यात्मिकशुद्धे र्हेतुः। सर्वस्या एव जातेस्तदीयं साहजिकं कर्म तज्जीवनाय भगवदुपासनारुपमेव भवति। तेनैव तु प्रकृतेर्महामातृरुपाया यथार्हमर्हणं भवति। अतएव स्ववर्णोचितेन कर्मणाऽऽधिदैवशुद्धिरपि स्वाभाविकी स्थूलकायस्य च मूलमुपादानं मातृपितृरजोवीर्य्यमेवेति तेनैवाधिभौतिकी शुद्धिरपि साधीयसीति त्रिविधामपि वर्णधर्मस्य शुद्धिमिमान्येव ज्ञानादीनि त्रीणि सम्पादयन्तीति स्मृतयोऽपि जगुः —

रजोवीर्य्यविशुद्ध्यैव भवत्यत्र सुरक्षितम्।
आधिभौतिकसंशुद्धे र्वीजं तु पितरो ध्रुवम्।।
विदित्वा पीठमर्यादा संस्कारशुद्धिपूर्विकाम्।
भवताश्च कृपापुञ्जैः पितरो रक्षितं भवेत्।।
आधिदैविकसंशुद्धे र्वीजं नूनं चिरन्तनम्।

१. कर्ममीमांसादर्शने, धर्मपदे सूत्रम् — ८१

सत्यलक्षणसङ्घो वै स्वस्मिञ्छश्वद् विकाशितः।।

क्रियमाणैः प्रयत्नैश्चेद् भवेद्वीजं सुरक्षितम्।

नूनमध्यात्मसंशुद्धेर्नात्र कार्या विचारणा।।

त्रिविधानां हि वीजानां रक्षणैर्विविधैः क्रमैः।

वर्णाश्रमाख्य धर्मस्य वीजं स्याद्रक्षितं ध्रुवम्।।

शुद्धेरभावादसम्पूर्णत्वं वर्णधर्मस्येति संसाधयति

"अङ्ग वैकल्याद पूर्णता[1]"

अङ्गानां वैकल्याद् भङ्गतोऽपूर्णत्वं वर्णधर्मस्येति सूत्रार्थः। पूर्वविज्ञानतो निश्चीयते यदत्र त्रिविधास्वपि शुद्धिषु यस्या ययोर्वा यावदल्पत्वं तावदेव वर्णधर्मेऽपूर्णतेति निर्विवादम्। उदाहरणतो यथा — कश्चिद् ब्राह्मणोऽध्यात्मशुद्धिविकलश्चेत्तर्हि स ब्राह्मणत्वस्य तृतीयांश— द्वयेनोपेतः, यदि स एवाध्यात्माधिदैव शुद्धिद्वयेन विकलस्तर्हि स जातिब्राह्मणः, तृतीयांशत एव ब्राह्मणत्वं तस्मिन्। रजोवीर्यशुद्धिस्त्वावश्यकी तस्याः साध्यत्वाभावात्। एवमेवान्येष्वपि वर्णेषु अङ्गवैकल्यमूहनीयम्। स्मृतावप्युक्तम् —

तथा श्रुतञ्च योनिश्चेत्येतद् ब्राह्मण कारणम्।

तथा श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः।।

प्रसङ्गसङ्गतिप्राप्ते ब्राह्मणभेदविज्ञानं ब्रूते —

"अतो ब्राह्मणाऽनेकविधत्वम्[2]"

---

१. कर्ममीमांसादर्शने, धर्मपादेसूत्रम् ८२

२. कर्ममीमांसादर्शने धर्मपादे सूत्रम् ८३

अतोऽस्मात्पूर्वकथित् विज्ञानादेव स्मृतिशास्त्रादिषु देवादिसंज्ञकानां ब्राह्मणानां कल्पना कृता बहुशोऽत्रऽवलोक्यते। यतो हि यत्र ब्राह्मणेषु रजोवीर्यशुद्धिरुपाऽऽधिभौतशुद्धिस्तु विद्यते। परन्तु ते आध्यात्माधिदैवात्मिके द्विविधे अपि शुद्धी न विद्येते, प्रत्युताऽनेकास्त्रुटयो बहुविधाश्च दोषास्तत्र ब्राह्मणेषु व्याप्तास्तदनुकूलत एव तैस्तैर्लक्षणै स्तेषां ब्राह्मणानां विविधाः श्रेणयो विभक्ताः। तथाहिः –

देव–मुनि–द्विज–क्षत्र–वैश्य–शूद्र–निषाद–पशु–म्लेच्छ–चाण्डालादयो दश–विधाः विप्राः सन्ति प्रोक्ताः। सन्ध्या–स्नान–जप–होम–देवतापूजन–अतिथिपूजन–वैश्वदेवादिकं कुर्वाणो विप्रो देव इत्युच्यते। शाक–पत्र–फल–मूल–वनवासादिके सदारतस्तथाऽहरहः श्राद्धे च यो निरतोऽस्ति स विप्रो मुनिरित्युच्यते। यो नित्यं वेदान्तं पठेत् सर्वसङ्गरहितो भवेत् सांख्ययोगविचारणे च यो निरतः स विप्रो द्विज इत्युच्यते। अस्त्रहस्ताः सुधन्वानः सर्वसम्मुखे संग्रामे आक्रम्य येन निर्जिताः स विप्रो क्षत्र इत्युच्यते। यो कृषिकर्मरतः गवां प्रतिपालकः वाणिज्य व्यवसायी च विप्रो वैश्य इत्युच्यते। लवण–लाक्षा–कुसुम्भ–क्षीर–घृत–मधुमांसानां च विक्रेता यो भवति स विप्रः शूद्र इत्युच्यते। यस्तस्कर–पापी सूचकः, दंशकः मत्स्यमांसे च लुब्धो भवति स विप्रो निषाद इत्युच्यते। यो ब्रह्मतत्त्वं न वेत्ति केवलं ब्रह्मसूत्रेण गर्वितो भवति, स विप्रः पशुरित्युच्यते। वापी–कूप–तडाग–आराम–सरसाञ्च निःशङ्कं यो रोधको भवति स विप्रो म्लेच्छ, इत्युच्यते। क्रियाहीनः मूर्खः सर्वधर्म

विवर्जितस्तथा सर्वभूतेषु यश्च निर्दयः स विप्रश्चाण्डाल इत्युच्यते।[1]

---

१. देवो मुनि द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छश्च चाण्डालो विप्रा दशविधाः स्मृताः।।
सन्ध्यां स्नानं जपं होमं देवताऽतिथिपूजनम्।
वैश्वदेवञ्च कुर्वाणो विप्रो देवः प्रकीर्तितः।।
शाके पत्रे फले मूले वनवासे सदारतः।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते।।
वेदान्तं यः पठेन्नित्यं सर्वसङ्गं परित्यजेत्।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते।।
अस्त्रहस्ताः सुधन्वानः संग्रामे सर्वसम्मुखे।
आक्रम्य निर्जिता येन स विप्रः क्षत्र उच्यते।।
कृषिकार्यरतो यश्च गवाञ्च प्रतिपालकः।
वाणिज्य व्यवसीयी च स विप्रो वैश्य उच्यते।।
लवणस्याथ लाक्षायाः कुसुम्भ–क्षीर–सर्पिषाम्।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते।।
तस्करश्चैव पापी च सूचको दंशकस्तथा।
मत्स्यमांसे सदा लुब्धः प्रोच्यते स निषादकः।।
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः।
तेनैव स च पापेन विप्रः पशुरुदाहृतः।।
वापी–कूप–तडागानामारामसरसां तथा।
निःशङ्कं रोधको यस्तु स विप्रो म्लेच्छ उच्यते।।
क्रियाहीनश्च मूर्खश्च सर्वधर्म विवर्जितः।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते।।

—स्मृतिसमुच्चये, मनुस्मृतिश्च।

वर्णधर्मस्य प्रधानमाश्रयमभिधत्ते: —

"बीजप्राधान्यं सर्वत्र[१]"

मानवेतरासु सर्वास्वपि चतुराशीतिलक्षयोनिषु यथा वीजस्यैव प्राधान्यं तद्वदेव वर्णधर्मेऽपि वीजस्यैवाभ्यर्हिततत्वम्। अत एव रजोवीर्यशुद्धिरुपाया आधिभौतिकशुद्धेस्तत्र सर्वाभ्यर्हिततत्वं परमावश्यकत्वञ्च। यतो हि ज्ञानकर्मणी साध्ये भवतोरजोवीर्यशुद्धिस्तु न साध्या, सा हि मातृपित्राधीनाऽपरिवर्तनीया च। तत्रापि वीजस्य प्राधान्यं सर्वत्रैव जगति दृश्यते यद् भूमिभेदेनोद्भिज्ज सृष्टिषु तारतम्यमाश्रितास्वपि वीजप्राधान्यं न हीयते। यादृग्वीजं भवति तादृगेवाग्रे सर्ग: प्रचलति, तस्मात् सर्वत्र वीजाभ्यर्हिततत्वमेव स्वीकरणीयम्।

इदानीं तद्वैशिष्ट्यं प्रतिपादयति —

"वीजरक्षणमार्य्यजाते:[२]"

आदिसर्गे सनकसनन्दनादयश्चत्वार: परमहंसा आविर्भूता: ततश्च प्रजापतीनां सृष्टि:, इत्येतद्द्वयमपि भगवतो ब्रह्मण: सृष्टि:। तदनन्तरम् प्रजापतिभिश्चालिता प्राथमिकी सृष्टि: ब्राह्मणानामेवाऽभूदित्युक्तं प्राक्। ततश्च ब्राह्मणतो वैजीसृष्टि: प्रारब्धा या क्रमशो ह्रसन्ती निम्नमार्गप्रसूता मनुष्या नवनमयन्ती अधोमुखी प्रावर्तत, यां निरोद्धुमेव, परमकारूणिकोऽसौ सर्वज्ञो भगवान् मनु: वर्णाश्रममर्यादासेतुञ्चकार। येनेयमार्य्यजातिरसभ्यतयाऽनार्यमनासादयन्ती न विलीयते।

---

*१. कर्ममीमांसादर्शने धर्मपादे सूत्रम् ८४*

*२. कर्ममीमांसादर्शने धर्मपादे सूत्रम् ९४*

वर्णोपकारवीजरक्षणमाहात्म्यं विस्तरशो विविच्य सम्प्रति अधोगमननिरोधिका–स्तच्छक्तीर्विविनक्ति: –

"ब्राह्मौजस्तपसा[१]"

वर्णाश्रमधर्म: कीदृगनन्तोपकारी मानवसमूहस्येति दिग्मात्रं निर्दिश्य सूत्रकृन्महर्षिर्वर्णाश्रममर्यादावतामन्तनिर्गूढा: शक्तिरभिद्यत्ते। तथा हि या शक्तिर्वर्णाश्रमाऽचारवतोऽधोगमनात् निवारयति सदोन्नतिपथं निनीषति सैव तेज: शब्देनोच्यते। स्मृतिष्वपि –

यो मे शक्ति: सदा जीवान् समाकर्षति माम्प्रति।
तदेव तेज: सम्प्रोक्तं यतो वेदान्तपारगै:।।

का सा शक्ति:, यस्यास्तेज इत्यभिधानम् इत्युपरितनेन सूत्रेण निर्दिष्टम्। तस्य तेजसो भेदद्वयम्। एकं ब्राह्मं तेजो यद् ब्राह्मणेषु तिष्ठति। द्वितीयं क्षात्रं तेजो यत् क्षत्रियेषु भवति। ब्राह्मणक्षत्रियावेव धर्मरक्षकावित्यनयोरेव तेजस: सत्ता। नान्यवर्णेषु तस्य स्वाभाविकी सत्ताऽस्तीति – स्मृतावाप्युदीरितम् –

"ब्राह्मणा धर्मवक्तार: क्षत्रिया धर्मपालका:।"

तत्र कथं ब्राह्मं तेजो ब्राह्मणेषु सम्भृतम्भवतीत्यनेन सूत्रेणोच्यते, तपसा ब्राह्मं ओजस्तेज: सुरक्षितं भवति। तच्च मुक्तिप्रदम्। क्षात्रं तेजोऽभ्युदयप्रदम्। तयो र्ब्राह्मं तेजोऽतिगरीय इति तपसैवाधिकशक्तिशालिना सुरक्ष्यते। तस्य च रूपमुक्तं प्राक् इह ब्राह्मणास्तयोवलेन यावत्तेजो वलं संग्रहीष्यन्ति तावदेव वर्णाश्रमधर्मस्य तद्धर्मिणां च अवनतेर्निरोधञ्च करिष्यन्ति।

---

१. कर्ममीमांसादर्शने धर्मपादे सूत्रम्, १०२

द्वितीयमाहः —

"क्षात्रं दानेन[1]"

ब्राह्मं तेजो यथा तपसा चीयते, तद्वदेव क्षात्रं तेजोऽपि दानेन वर्धते। ब्राह्मस्य तेजसो रक्षणे यावानायासो न तावानायासो द्वितीयस्य क्षात्रतेजसो गुप्त्यै। ब्राह्मणो हि सर्वमपि लौकिकमैश्वर्यमिन्द्रियसुखञ्च परित्यज्य तपसि प्रवर्तेत, तद्वदेव क्षत्रियेणापि भोगैश्वर्यादि–लिप्सुनापि सत्ता दानपरायणेनैव भवितव्यम्। अनुदारे कृपणे दानधर्मविरहिते राजनि न क्षात्रतेजस्थितिः सम्भाविनी।

तपोविज्ञानालोचनं यथा तपःशक्त्या ब्रह्मतेजोऽभिवृद्धिर्विज्ञायते तथैवौदार्येण निर्लोभेन सात्विकदानसम्प्रसक्त्या च क्षत्रियाः प्रोन्नताः समृद्धियुजो निजेन संरक्षितेन क्षात्रेण तेजसा वर्णाश्रमधर्मिणोऽपि संरक्षन्तीति।

उभयोर्निर्गमप्रकारमाहः —

"उभयो निर्गमो योगाहवाभ्याम्[2]"

योगश्च आहवश्च योगाहवौ ताभ्यां उभयो र्ब्राह्मणक्षत्रिययोः क्रमशो निर्गमोऽभ्युदयो भवति।

पूर्वसूत्रेण ब्राह्मणक्षत्रिययोः क्रमशस्तपस्यादानधर्माभ्याम्मुख्याभ्यां तत्तेजसोः संरक्षणेन

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०३*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०४*

सह वर्णाश्रमिणां कल्याणोन्नतिरपि सम्भवतीत्युक्त्वा इदानीं तयोश्चरमोन्नति प्रकारमनेन सूत्रेण प्रतिपादयति –

तथाहि – ब्राह्मं तेजः प्रयाणकाले ब्राह्मणं योगशक्तिसम्पन्नमूर्ध्वलोकान्निनीषति। क्षात्रं तेजः क्षत्रियं युद्धमृत्युनोर्ध्वलोकं समुन्नयति। ब्राह्मणस्य कृते योगबलेन क्षत्रियस्य कृते धर्मयुद्धेन शरीरत्यागादन्यो न कोऽपि शुभावहो मार्गः। उक्तञ्च –

द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः।।
अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्।
धर्माद्धियुद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते।।[1]

योगेनात्मानुसन्धानं युद्धेन च धर्मानुसन्धानमुभयोः सम्वर्द्धत इति शुभावहो विधिः, ब्राह्मणस्य ज्ञानित्वाद्योगित्वाच्च योगस्यावसरस्तूपलभ्यत एव। क्षत्रियस्य तु धर्मयुद्धा–वसरानुपलम्भात् शरीरत्यागासम्भवात् किं विधेयमिति प्रश्ने तस्य सत्येवं व्यतिकरे योगबलेन शरीरत्यागे यत्नविधानमेव प्रशस्यम्, यतोहि योगानुष्ठानम् न कस्यापि वर्णाश्रमस्य स्वाधिकारविरूद्धम्।

उभयोः साक्षात्फलं ब्रूतेः –

"ते निःश्रेय साभ्युदयप्रदे।[2]"

---

१. श्रीमद्भागवतगीतायां द्वितीयेऽध्याये, श्लोक ३१

२. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०५

ते ब्राह्मणक्षात्रतेजसी क्रमशो निःश्रेयसश्चाभ्युदयश्च तौ तथोक्तौ तयोः प्रदे समर्पके स्तः। यथा सभामण्डपं यज्ञमण्डपं वा स्तम्भवलेन स्तम्भाश्रयमेव तिष्ठति। तथैव वर्णाश्रम–धर्मौ ब्राह्मणक्षत्रियबलेन तदाधारावेव प्रतिष्ठेते आश्रमधर्मस्य वर्णधर्ममूलकत्वात्। विना वर्णधर्मंनाश्रयधर्मव्यवस्थितिः। तथा ब्राह्मणक्षत्रयोरुभयोः सम्पृक्तबलविरहात् न वर्णाश्रम–धर्मयोरपि कस्यचन साधीयसी स्थितिः। सर्वमप्याभ्युदयिकं कृत्यं क्षत्रियैः सम्पाद्यते, नैःश्रेयसिकश्च मार्गो ब्राह्मणैः संरक्ष्यत इत्युभाभ्यामपि परस्परं साहाय्यमाचरद्भ्यां जगद्रक्षणं गमनागमनचक्रसंरक्षणञ्च क्रियते। अन्थापीदं विज्ञानं विवरीतुं शक्यते। तथाहि, सर्वधर्मरक्षणं धार्मिकनृपानुशासनतः प्रचरति। मोक्षप्रदज्ञानमार्गरक्षणञ्च ब्राह्मणाध्यवसायेन संसाध्यते। इति ब्रह्मतेजसी निःश्रेयसप्रदत्वं क्षात्रस्य च तस्याभ्युदयप्रदत्वमवश्यमङ्गीकरणीयम्। स्मृतिष्वपि बहुशो ब्राह्मणक्षत्रियसम्बन्धचर्चा श्रूयते। तथाहि –

ब्राह्मण्यमुत्तमा दृष्टिः क्षात्रमप्रतिमं वलम्।
ते यदा चरतः सार्धं तदालोकः प्रसीदति।।
नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते।
ब्रह्म क्षत्र च सम्पृक्तमिह चामुत्र वर्द्धते।।
ब्रह्मक्षत्रेण संसृष्टं क्षत्रञ्च ब्रह्मणा सह।
उदीर्णे दहतः शत्रून् वनानीवाग्निमारुतौ।।

प्रसङ्गः सम्प्राप्तं चातुवर्णस्य चतुर्वर्गसम्बन्धमभिधत्तेः –

"चातुर्वर्ण्ये चतुर्वर्गः[१]" .

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०६

इह खलु प्रयोजनमुद्दिश्यैव जनानां प्रवृत्तिर्दृश्यते। ते च यथा कामार्थधर्ममोक्षा इति क्रमशोऽभिधीयन्ते। तथैव क्रमशश्चतुर्णां शूद्रवैश्यक्षत्रियब्राह्मणानां धर्मतस्तैः सह सम्बन्धोऽपि प्रतीयते। प्रतिवर्णं धर्मपर्य्यालोचनयैवास्य विज्ञानस्य सार्थक्यभानमुदेति। स्मृतावपि निर्दिष्टम् –

स्वभावतो नियोज्येरन् प्राणिनां सम्प्रवृत्तयः।
चतुर्धा नात्र सन्देहो विद्यन्ते विश्वभूतिदाः।।

**तत्र शूद्रधर्म निर्वक्तिः –**

**"कामप्रधानः शूद्रः[१]"**

चतुर्षु प्रयोजनेषु किमपि प्रयोजनमुद्दिश्यैव प्राणिनां प्रवृत्तयो नियुज्यन्ते। तत्र शूद्रप्रवृत्तय कामरूपं प्रयोजनमुद्दिश्य परिणमन्ते कामस्याऽद्यप्रयोजनत्वात्। स्मृतावप्युक्तम्–

प्रकृतेः शूद्रवर्णस्य दासीकामस्य सत्यलम्।
तमोधाराश्रिता शश्वुजायते परिणामिनी।।

अतएव गोतोपनिषद्यपि शूद्रस्य स्वभावजंकर्म तमः परिणामरूपमेवोक्तम् –

"परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।[२]"

**वैश्यधर्ममिदानीं ब्रूतेः –**

**"अर्थप्रधानो वैश्यः[३]"**

---

*१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०७*

*२. श्रीमद्भागवद्गीता अ.१८, श्लोक ४४*

*३. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०८*

पूर्वोक्तविज्ञानानुरूपतो वैश्यवर्णस्य प्रकृतिरर्थप्रयोजनाभिमुखी परिणमते। उक्तञ्च गोतोपनिषदि: —

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम्[१]

स्मृतावप्यस्यैव विज्ञानस्य परिपोषो दृश्यते —

प्रकृतिर्वैश्यवर्णस्य सत्यर्थानुचरी सदा।
अस्मिन् प्रधानतो लोके जायते परिणामिनी।।

अधुना क्षत्रियस्य धर्ममाह —

"धर्मप्रधान: क्षत्रिय:[२]"

शूद्रवैश्यप्रकृतिर्हि क्रमश: कामार्थप्रयोजनमभिलक्ष्य परिणमत:। कामार्थयोरिन्द्रिय–सेवामूलकत्वात् तदनुसारिण्यो: प्रकृत्योर्नकथमपि तेजोपरामिधस्यौजसोऽभिसम्बन्ध:। अत एवौजसोऽभिक्रम: क्षत्रियब्राह्मणधर्मयोरेवास्तीति पूर्वमेवोदीरितम्। अनेनापि सूत्रेण तदेव विज्ञानं पुनर्द्रढयति — यद् धर्मात्मज्ञाने एव जीवान् भगवत्तेज: शक्त्याऽध्यात्म सन्निकर्षं प्रापयत:। तत्राद्यं धर्ममाश्रित्य क्षात्रतेज: समाश्रिता क्षत्रियप्रकृतिरध्यात्मभावमभिलक्ष्य परिणमते। स्मृतिष्वेवमुपलभ्यते —

क्षत्रियप्रकृतिर्धर्मलक्ष्येणैव प्रधानत:।
परिणामं किलाप्नोति पितरो नात्र संशय:।।

---

१. श्रीमद्भगवद्गीता अ. १८ श्लोक ४४
२. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १०९

गीतोपनिषद्यपि उक्तक्षत्रियस्वाभाविकधर्मतोऽप्यस्यैव द्रढिभावमृश्यते। तथाहि –

शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।[1]

सम्प्रति ब्राह्मणस्य तमभिधत्ते: –

"मोक्षप्रधानो ब्राह्मण:[2]"

आत्मज्ञानाश्रितं ब्रह्मतेजो मोक्षलक्ष्याश्रयणतोऽधिगम्यतेऽत्र नाणुरपि सन्देहावसर:। इत्यस्मादेव हेतो र्ब्राह्मी प्रकृतिर्मुक्तिमभिलक्ष्य प्रवहन्ती स्वरूपपारावारे समुपेता विश्राम्यति। स्मृतावप्युक्तम् –

ब्राह्मणप्रकृतिर्मुख्यं मोक्षलक्ष्यं निरन्तरम्।
समाश्रित्य प्रयत्नेन नूनमग्रे सरेदिह।।

भगवता श्रीकृष्णेनापि सहजकर्मनिर्णयवेलायां श्रीगीतोपनिषद्युद्घोषितम् –

शमो दमस्तप: शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।[3]

अत एव जगति केवलमात्मज्ञान–विस्तारहेतुं पुरुषार्थमवलम्बमाना: तयो व्रतञ्च स्वीयं मुख्यं सांसारिकं कर्त्तव्यं मन्यमाना: परोपकारपरायणा ब्राह्मणा स्त्रिलोकपूज्या महीतले विचरन्ति। उक्तञ्च –

१. *श्रीमद्भगवद्गीता अ. १८, श्लोक ४३*
२. *गर्भमीमांसादर्शने धर्मपादेसूत्रम् ११०*
३. *श्रीमद्भागवद्गीतायां अध्याय १८, श्लोक ४२*

ब्राह्मणस्य तु कायोऽयं क्षुद्रकामाय नेष्यते।

कृच्छ्राय तपसेऽत्यर्थं प्रेत्यानन्त्यसुखाय च।।

(२) आश्रमधर्मः

ब्रह्मचर्य–गृहस्थ–वानप्रस्थ–सन्यासभेदादाश्रमो हि चतुर्धा तत्र प्रथममाश्रमं ब्रह्मचर्यं निर्वक्तिः –

"प्रवृत्यर्हत्वं ब्रह्मचर्ये[१]"

ब्रह्मचर्ये प्रथममाश्रमे प्रवृत्तिमार्गस्यार्हत्वं योग्यता सम्पाद्यते इति शेषः।

वर्णनारीधर्माभ्यां प्रवृत्तिमार्गस्य साक्षात्सम्बन्धः, निवृत्तिमार्गस्य परोक्षसम्बन्धः। एव–माश्रमधर्मो हि निवृत्तिप्रधानो यो हि आद्ययोराश्रमयोः प्रवृत्तिप्राधान्यस्मृतिः – सापि निवृत्तिशिक्षार्थमेव। चतुर्ष्वाश्रमेषु ब्रह्मचर्यस्य प्राथम्यात्तत्र शास्त्रोक्त–प्रवृत्तिपथगमनस्यैवाऽभ्यासः शिक्ष्यते।

यतो हि श्रुतिस्मृतिषु ब्रह्मचर्यस्य ये ये नियमा निरुपितास्तैः सर्वैरपि शब्दशः प्रवृत्तिपथशिक्षणात्मकमेव विज्ञानं समर्थ्यते। निष्कर्षतो विना ब्रह्मचर्याश्रमीयां पूर्णां शिक्षां न कोऽपि पुमान् गृहस्थाश्रमस्यादर्श जीवनं यापयितुं समर्थः स्यादिति।

तस्य प्रधानं कर्तव्यमाहः –

ब्रह्मचर्याश्रमः – "तत्र प्राधान्यं विद्या–ब्रह्मचर्य–गुरुसेवानाम्[२]"

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३२*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३३*

यद्यपि वेदशास्त्रादिषु ब्रह्मचर्याश्रमस्य धर्मा विस्तरशो निर्दिष्टास्तथापि पूर्वोक्तविज्ञानपुष्टये महर्षिणा तस्य मौलिकान् सिद्धान्तान् प्रधानकर्त्तव्यानि च निर्दिशता विद्या—ब्रह्मचर्य—गुरुसेवेति सर्वप्रधानं कर्त्तव्यं तस्मिन्निति परामृश्यते।

तत्र विद्याऽभ्यासेन सदसद्विचारशक्तिनैपुण्यं, लोकयात्राकर्त्तव्यनिर्णयज्ञानं, धर्मार्थ—काममोक्षाणां यथार्थस्वरूपाऽवगतिः सम्पाद्यते। ब्रह्मचर्येण च शारीरिकमानसिकात्मिकब—लोपलब्धिः, इन्द्रियसंयमाभ्यासपाटवञ्चासाद्यते। गुरुसेवया च भगवत्प्रसादोपलब्ध्याऽत्मोन्नति मार्गः परिष्क्रियते। इत्येवं ब्रह्मचर्याश्रमेऽभ्यस्तप्रवृत्तिमानक्रमो मानवो गार्हस्थ्याश्रमे प्रवेशयोग्यता—मासादयति।

**गृहस्थाश्रमः —**

**तत्र द्वितीयमाश्रममभिधत्तेः —**

**"तच्चारितार्थं द्वितीये[१]"**

ब्रह्मचर्याश्रमे प्रवृत्तिमार्गोपयोगिनीं शिक्षामधिगत्यगार्हस्थ्ये तच्चारितार्थ्यमाचरद्भिरात्मोन्नति रासाद्यत इति स्मृतावप्युक्तम् —

प्रवृत्तिं शास्त्रविहितां ब्रह्मचर्ये तु शिक्षते।
समाचरति गार्हस्थ्ये तां प्रवृत्तिं पुमान् भुवि।।

**प्रसङ्गतस्तन्माहात्म्यमाख्याति —**

**"ज्यैष्ठ्यं द्वितीयस्य सर्वाश्रयत्वात्[२]"**

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३४*
२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३५*

गृहस्थाश्रमोऽयं सर्वेषामप्याश्रमाणामाश्रयास्पदमिति सर्वसम्मतमिति स्वल्पधियामपि हृदयगम्यम्। यथा क्षेत्रस्वरूपत्वात् वर्णधर्मशुद्धेर्निदानभूतत्वात् नारीधर्मस्तदाधारस्थलम्, तथैव त्रयाणामप्याश्रमाणां जीवनाधायकत्वात् स्वसत्ताऽभावे तेषान्त्रयाणामप्युच्छित्तिप्रसञ्जकत्वाद् गृहस्थाश्रमस्तेषां त्रयाणामप्याश्रयस्थलम्।

तथा हि ब्रह्मचर्याश्रमस्य सर्वमप्याचारादिप्रतिपालन निदानं गृहस्थाश्रम एव। वानप्रस्थसंन्यासाश्रमयोर्योगक्षेम निर्वाहकः स एव। अत एवायमाश्रमः सर्वाऽभ्यर्हितो ज्येष्ठश्चाभिधीयते। स्मृतिष्वप्युदीरितम् —

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः।।
सर्वेषामपि चैतेषां वेदस्मृतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि।।

यथा नदीनदः सर्वे सागरे यान्ति संस्थितिम्।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्।।
यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।

यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही।।
स सन्धार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता।
सुखञ्चेहेच्छता नूनं योऽधार्य्यो दुर्बलेन्द्रियैः।। इति।।

अन्यच्च –

"तत् सुलभं करवीरवत्[1]"

यथा करवीरवृक्षः पार्वत्यप्रदेशेऽनूपप्रदेशे मरुस्थले सर्वत्रैव शर्कराबहुलेऽपि प्रदेशे समुपलभ्यते, तथैव गार्हस्थ्याश्रमोऽपि आर्य्यानार्य्यादिषु सर्वत्रैव समानतया तिष्ठतीति द्वितीयमिदं माहात्म्यमस्य यन्नास्य ब्रह्मचर्यादिवत् आर्य्यजातावेव वर्णाश्रमधर्मप्रधानायां स्थितिः किन्तु सर्वत्रैव सर्वविधास्वपि जातिष्वेतस्य समानास्थितिरिति।

वानप्रस्थाश्रमः–

सम्प्रति तृतीयमाख्यातिः – "निवृत्तेरर्हत्वं तृतीये[2]"

पूर्वयोराश्रमयोः प्रवृत्तिमुखीनामन्तःकरणवृत्तिमभ्यासभोगाभ्यां क्षपयित्वा निवृत्ति-द्वारोद्घाटनञ्च विधायास्मिन् शान्तिद्वारात्मके तृतीये वानप्रस्थाश्रमे निवृत्त्यधिकारप्राप्तये पुमान् प्रविशति। तत्र कथं कथं निवृत्तिमार्गनिर्वाहः स्यादित्यादिशिक्षणमभ्यस्यते।

इह पत्नी सहचरी भूत्वा यदि स्थातुमीहते तर्ह्यपि दम्पत्योः कृते निवृत्तिप्रधानैव शिक्षोपदिश्यते। अस्मिन्नाश्रमे निवृत्तिमार्गोपयोगिनीं सम्पूर्णां शिक्षामधिगत्याग्रिमाश्रमे साधको निवृत्तिमार्गस्योत्तमोऽधिकारी भूत्वा कृतकृत्यतामाश्रित्य नन्दति। यथा गार्हस्थ्यस्याधारभूमिर्ब्रह्म-चर्याश्रमस्तथैव संन्यासाश्रमस्य तुरीयस्यायमाश्रमो मूलभित्तिः।

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३६*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३७*

स्मृतिष्वप्येवमेवोक्तम् —

एवं गृहाश्रमे स्थित्वा विधिवत् स्नातको द्विज:।
वने वसेत्तु नियतो यथावद्विजितेन्द्रिय:।।
गृहस्थस्तु यदा पश्येद्बलीपलितमात्मन:।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्।।
सन्त्यज्यग्राम्यमाहारं सर्वञ्चैव परिच्छदम्।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा।।

अन्यच्च —

उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तीश्च तेभ्यो विनिवेद्य काश्चित्।
स्थाने कुमारी: प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत्।।

**सन्यासाश्रम:** — साम्प्रतं तुरीयाश्रमं वर्णयति —

**"तत्सिद्धिस्तुरीये[1]"**

नि:श्रेयस मूलस्य निवृत्तिमार्गस्य पूर्णोऽधिकारोऽस्मिंस्तुरीये संन्यासाश्रमे श्रद्धालुना साधकेनासाद्यते।

स्मृतिष्वप्यभिहितम् —

वानप्रस्थे निवृत्तेस्तु शिक्षा पुंसु प्रजायते।
निवृत्ति: पूर्णतां याति संन्यासाश्रममेत्य वै।।

यथा ब्रह्मचर्याश्रमे सर्वास्वपि नारीषु मातृभावकल्पनया, विद्याप्राप्तौ पूर्णाऽवधानादिना,

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३८

स्वजीवनप्रधानलक्ष्यकल्पनया, सर्वफलप्रदायाः गुरुसेवायाः साधुसम्पादनेन च गृहस्थाश्रम–सञ्चालनयोग्यतामासादयति तथैव वानप्रस्थाश्रमतोनिवृत्तिमार्गोपयोगिनीं सम्पूर्णां शक्तिमासाद्येह तुरीयाश्रमे साधकः पूर्णतया निवृत्तिपथगो भवति। ततश्च यथाक्रमं कुटीचर–बहूदक–हंस–परमहंसाधिकारं यथाकालमधिगत्य जीवन्मुक्तपदमाश्रित्य सायुज्यमुक्तिमुपगच्छतीत्ययमेव सर्वसंस्काराणां चरमः संस्कारः सर्वसाधनानामन्तिमं साधनं सर्वाधिकाराणमन्योऽधिकारः।

पुनराश्रमधर्मं स्पष्टयितुं प्रथमाश्रमस्य मौलिकं सिद्धान्तं ब्रूतेः –

"नियमप्रधानं ब्रह्मचर्यम्[१]"

विस्तरशो नियमलक्षणमभिहितं प्राक् तमेव नियममभिलक्ष्य महर्षिभिर्ब्रह्मचर्य्याश्रमस्य सदाचारा निर्दिष्टाः। जगज्जननीनां नारीणां सकाशात् तासु मातृभावनया गुरुनिमित्तं भिक्षोपार्जनं, तेन च कामाहङ्कारयोः प्रबलप्रतापयोरप्यर्य्योर्जयकरणं, गुरुशुश्रूषया च स्वान्तः शुद्धि सम्पादनभित्ति नियमस्य जागरुकं साधनम्। नियमधर्मभ्यासतः प्रथमाश्रम एव द्विजेभ्योऽध्यात्मपथा रोहणक्षम शक्तिप्रदामिति वर्णाश्रमधर्मस्य मुख्यं लक्ष्यम्।

इत्येवं ब्रह्मचर्य्याश्रमाचारा यथा–यथा – सूक्ष्मदृष्ट्या पर्यालोचिता भवन्ति, तथा तथा नियमधर्मभित्तिं समाश्रिता एवत उपलभ्यन्ते।

द्वितीयस्य गृहस्थाश्रमस्य मूलभित्तिं विविनक्तिः

"संयम–प्रधानं गार्हस्थ्यम्[२]"

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १३९*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १४०*

नियमधर्मसंस्कारेण संस्कृता एव द्विजा अस्मिन्नाश्रमे प्रविशन्ति। तेन हि नियमधर्माऽभ्यासेन गृहस्थाश्रमे कामिनीकाञ्चनादिप्रलोभस्तान् एकपद एव विलोभितुन्नैवशक्नोति।

किन्तु तत्राश्रमे प्रविश्य तस्य च प्रवृत्तिमूलकैश्वर्यपूर्णतया तासु प्रवृत्तिष्वेवासक्तः तत्संस्कारानेवाधिकान्न समुपार्जयेदिति संयममूलकानां संस्काराणामप्यभ्यासोऽस्मिन्नाश्रमे आवश्यक इत्यत् एवेह संयमस्य प्राधान्यम्। संयमाऽभ्यासेन हि गृहाश्रमी प्रवृत्तिसंग्रामे विजयी भूत्वाऽध्यात्मिकोन्नतिद्वारमुद्घाटयितुं समर्थो भवति।

वहिरिन्द्रियान्तरिन्द्रिययोरुद्दामगतिरोध एवात्र संयमो न तु योगशास्त्रसंज्ञितः। अतोऽत्र संयमे नियमस्याप्यन्तर्भावः गृहस्थाश्रमीय विस्तृताचाराणां पर्य्यालोचनेन संयमभित्तिस्थितिरेव तेषां सिध्यति।

तृतीयस्य वानप्रस्थस्य मौलिकं सिद्धान्तं ब्रूतेः —

"तपः प्रधानं वानप्रस्थम्[1]"

तपोधर्मस्वरूपं विस्तरशो वर्णितं प्राक् वानप्रस्थाश्रमेऽतिकठिनानां साधनसङ्घानामभ्यासो विधीयते। यतोहि — प्रवृत्तिमार्गं परित्यज्य सद्य एव निवृत्तिमार्गार्थं वद्धपरिकरेण वानप्रस्थाश्रमिणा भूयते। वानप्रस्थाश्रमीयो हि सदाचारः शारीरिकेण मानसिकेन वाचनिकेन त्रिविधेनापि तपसा परिपूर्णः।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १४१

ननु नारीधर्म वानप्रस्थधर्मयोरूभयोरपि तपोमूलकत्वात्तयोर्भेदनिदानं किमित्याशङ्कायामुत्तरयति सत्यपि तयोस्तपोमूलकत्वे परस्परविभेदकहेतुबाहुल्यात् प्रकाशान्धकारवन्महदन्तरम्।

तथाहि — नारीधर्मः प्रवृत्तिसूचको वानप्रस्थधर्मश्च निवृत्तिमूलकः, नारीधर्मः पारतन्त्र्यप्रधानो वानप्रस्थश्च स्वातन्त्र्यप्रधानः। पूर्वस्मिन्सृष्टेः प्राधान्यम् परस्मिंश्च लयस्य। पूर्वत्र नार्य्याः त्रिविधमपि शरीरं सर्वा अपि शरीरवाङ्मनसः प्रवृत्तयस्तपसा पत्युरधीनाः, अपरत्र वानप्रस्थाश्रमिणस्तु स्त्रीसहचरत्वेऽपि तस्याः स्त्रियः सर्वथा वाङ्मनसः कायादिभिः परित्यागः। इत्यादिभिर्हेतुभिस्तयोः पार्थक्यं सुस्पष्टमेव।

इदानीं चरमाश्रमस्य संन्यासस्य मूलसिद्धान्तं निर्णयतिः —

"त्यागप्रधानं चतुर्थम्[१]"

विना सर्वस्वहानान्मुक्तेर्दुर्लभत्वात् मुक्त्यर्थं जीवानां स्वसम्पत्तेरहङ्कारस्याहङ्कारजयोरिहलौकिकपारलौकिकयोरभ्युदययोस्त्याग आवश्यकः। एतदर्थमेव क्रमतः कूटीचकवहूदक हंसपरमहंसाद्यवस्थाभिः संन्यासाश्रमगैर्ब्राह्मणवंशजैस्त्यागशिक्षाऽभ्यस्यते। सर्वेष्वपि संस्कारेषु संन्याससंस्कारस्यान्तिमत्वात् तस्य सर्वेऽपि सदाचारास्त्यागनियममूलका एव निरूपिताः। स्मृतावप्युपदिष्टम् —

संयमस्तु गृहस्थानां नियमो ब्रह्मचारिणाम्।
वानप्रस्थाश्रमस्थानां तपस्त्यागस्तु न्यासिनाम्।।

---
१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १४२

सर्वेषामपि चरमफलमभिधत्ते –

"एतान्यभ्युदयनिःश्रेयसकराणि[1]"

इमे चत्वारोऽप्याश्रमा अभ्युदयनिःश्रेयसप्रदाः। यद्यपि प्रथमद्वितीयौ ब्रह्मचर्यगृहस्थौ प्रवृत्तिप्रधानौ तृतीयतुरीयौ वानप्रस्थसंन्यासौ च निवृत्तिपरायणौ तथापि क्रमेण नियम–संयम–तपस्त्यागमूलकत्वात् तदनुष्ठातॄणामभ्युदयनिःश्रेयसप्रदाने चत्वारोऽपि समाना एव।

यतो हि – नियमादयश्चत्वारोऽपि प्रत्येकं सम्यगनुष्ठिता अभ्युदयमात्रमेव न वितरन्ति, किन्तु निःश्रेयसमपि वितीर्य्यैव विश्राम्यन्तीति निर्णीतः पन्था।

## (3) यतिधर्मः

यदि समर्थो भवेत् देहमात्राऽवशेषितः सन्यस्य ग्रामे ग्रामे एकैकां रात्रिं नयेत् निरपेक्षः सन् महीं विचरेत्। यद्यसौ यतिः वासो विभृयाच्चेत् तदा गुह्यप्रदेशं आच्छाद्यते येन तावन्मात्रं कौपीनं धारयेत्। आपत्तौ सत्यां दण्ड–कमण्ड्वल्यादि अन्यदपि किञ्चित् त्यक्तं स्यात्तदपि पुनः धारयेत्। आत्मन्येव रमणशीलो निराश्रयो सर्वभूतसुहृत् शान्तः नारायणपरायण एकाकी एव भिक्षुर्विचरेत्। कार्यकारणात् परे आत्मनि समस्तं विश्वं आत्मानञ्चावलोकयेत्। सर्वत्र जडचेतनमये जगति आत्मनि च परं ब्रह्मैवाऽवलोकयेत्। सायं प्रातश्च आत्मादिदृक्षुरात्मनो तत्त्वं पश्यन् वन्धादिकं मायामयं कल्पितं पश्यन् सर्वत्र परं ब्रह्मैव पश्येत्। निश्चितं मृत्युं अनिश्चितं जीवनमुभयमपिं नेच्छेत्। अस्य देहस्य प्रभवोऽप्ययश्च यस्मात्तं जन्ममरणहेतुभूतम् केवलं कालं प्रतीक्षेत् अर्थात्तदधीनं सर्वमस्तीत्यालोचयेत्। असच्छास्त्रेष्वनात्मप्रतिपादिकेषु

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १४३

न कदापि संलग्नो भवेत् जीविकाप्रतिपादिकं आयुर्वेदज्योतिषादिशास्त्रमपि नाभ्यसेत्। वादान् प्रतिपादांश्च दूरतः परिहरेत्। कमपि पक्षञ्च नाश्रयेत्। बहून् शिष्यान् अध्यात्मेतरान् बहून् ग्रन्थान् बलान्नाभ्यसेत्। कस्यचन विशेषव्याख्यामपि न कुर्वीत्। मठादीनपि न रचयेत्। यतेः स्वस्य किमपि धर्मद्योतको न भवति किन्तु मुक्तिप्रयोजनक एव दण्डादिर्भवति अतस्तन्त्यजेत् गृह्णीयात् वा। यतिर्मनीषी विद्वानपि उन्मत्तवालवत् वाग्मीसन् मूकवत् व्यक्तचिह्नोऽपि आश्रमादिचिह्नरहितोजनसङ्गपरिहारार्थ नृणां मध्येऽऽत्मानं प्रकटयेदित्यादिधर्माः सन्ति यतेः।[१]

---

१. *कल्पस्त्वेवं परिव्रिज्य देहमात्राऽवशोषितः।*
*ग्रामैकरात्रविधिना निरपेक्षश्चरेन्मुनिः।।*
*विभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम्।*
*त्यक्तं न दण्डलिङ्गादेरन्यत् किञ्चिदनापदि।।*
*एक एव चरेद् भिक्षुरात्मारामोऽनपाश्रयः।*
*सर्वभूतसुहृच्छान्तो नारायणपरायणः।।*
*पश्येदात्मन्यदो विश्वं परं सदसतोऽव्यये।*
*आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये।।*
*सुप्तप्रबोधयोः सन्धावात्मनोगतिमात्मदृक्।*
*पश्यन्बन्धं मोक्षं च मायामात्रं न वस्तुतः।।*
*नाभिनन्देद् ध्रुवं मृत्युमध्रुवं चास्य जीवितम्।*
*वादवादांस्त्यजेत् तर्कान् पक्षंकं च न संश्रयेत्।।*
*नासच्छास्त्रेषु सज्जेत नोपजीवेत् जीविकाम्।*
*कालं परं प्रतीक्षेत भूतानां प्रमवाऽप्ययम्।।*
*न शिष्याननुवध्नीत ग्रन्थान्नैवाभ्यसेद् बहून्।*
*न व्याख्यामुपयुञ्जीत नारम्भानारभेत क्वचित्।।*
*अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्त वालवत्।*
*कविर्मूकवदात्मानं न दृष्ट्या दर्शयेन्नृणाम्।।*
*न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः।*
*शान्तस्य समचित्तस्य विभृयादुत वा त्यजेत्।।*
*— श्रीमद्भागवते सप्तमस्कन्धे, अ. १३, श्लोक १—१०*

कुटीचक—बहूदक—हंस—परमहंसभेदात् यतिश्चतुर्धा भवति। यतेर्धर्मं निरूप्य सम्प्रति भक्तप्रवर प्रहलाद—प्रश्नानुत्तरयन् ब्राह्मणो वक्ति — हे असुरश्रेष्ठ! भवानार्य मान्यः, सम्प्रति प्रवृत्तिनिवृत्योरन्तर्दृष्ट्या स्थानानि फलानि च वेद। यस्य परमहंसस्यानन्ययाभक्त्या हृदगतो नारायणो भगवान् सूर्यवत् यथान्धकारं निःस्सारयति तथैवाज्ञानं दूरी करोति। भवान् सम्भावनीयोऽतस्तव किमप्यविदितं नास्ति तथापि ते प्रश्नानुत्तरयामि।

अभिलषितपदार्थैरपर्याप्तया भववाहिन्या तृष्णयाजन्ममरणकारिण्येहिभावः कर्मसु प्रवर्तमानः नानायोनिषु प्रवेशितोऽहं कर्माणिकार्यमाणोऽस्मि। यदृच्छया तृष्णया नरदेहं प्राप्तिः कर्मभिः स्वर्गापवर्गयोद्वारं अधर्मेण पशुपक्षियोनिं धर्माधर्माभ्यां मनुष्यत्वस्य योनिं परिभ्रमन् अस्मिन् मनुष्यत्वेऽपि दम्पतीनामानन्दाय दुःखपरिहाराय च कर्माणि कुर्वतां जनानां दुःखप्राप्तिमेवाऽवलोक्याहं निरुद्यमोऽस्मि। समस्तकर्मणां तन्मूलभूततृष्णानां निवृत्तिरेवा—ऽऽत्मनोऽतिसुखरूपं तनुर्दृष्ट्वा प्रारब्धान् भोगान् भुञ्जन्नरं शये। मनुष्यः स्वार्थं स्वरूपभूतं सुखं परमात्मानं विद्यमानमपि विस्मृत्य मिथ्याभूते जगति दुःखदां जन्ममरणादिलक्षणां संसृतिं लभते। अत्रो हरिणो यथा तृणादिभिश्छन्नं जलं परित्यज्य मृगतृष्णामुपधावति तद्वत् वासुदेवादन्यत्र सुखमवलोकयन् मूर्खो जनो धावति। कर्माधीनैर्देहादिभिः सुखं वाञ्छतो दुःखनिवृत्तिं च कुर्वतस्तथा भगवद् विमुखस्य समस्ताः क्रियाः निष्फला भवन्ति। पुनराध्यात्मिकादिभिर्दुःखै परिपूर्णस्य मनुष्यस्य कष्टेन प्राप्तैर्धनैर्विषयैश्च कियत् सुखं प्राप्येत् न कियदपीति ज्ञात्वा सर्वतः पुत्रादिभ्योऽपिरितः शङ्काग्रस्तानां भयादप्राप्तनिद्राणां लोभाक्रान्ताना—मवशीकृतेन्द्रियाणां धनिनां क्लेशं पश्यामि। प्राणोपलक्षितदेहवतां धनिनाञ्च राजतस्तस्करतः शत्रोः स्वबन्धुबान्धवात् पशुपक्षितः धनिभ्यः स्वस्मान्निजाज्जनादपि भयमहमवलोकयामि। प्राणार्थमूलकाः शोकमोहभयक्रोधरागक्लैव्यश्रमादयो भवन्ति, अतः पण्डितः प्राणार्थयोः स्पृहां त्यजेत्। अत्र प्राणो वलं जानीयात् बलिनां बलिभ्यो भयं जायेत्। इति भावः। अस्माकमस्मिन् जगति मधुकारो महासर्पोऽजगर स्तौ गुरूत्तमौ स्तः ययो शिक्षया मधुकारात्

परितोषं अजगराच्च वैराग्यं वयं लब्धाः। मधुमक्षिकातश्च सर्वविषयेभ्यो मया विरागः शिक्षितः। यतो हि – यथा मधुमक्षिकान् हत्वा किरातादयोमधुहरन्ति तद्वत् धनपतिं हत्वा अन्यः कश्चन दुःखेन लब्धंधनं हरति इति ज्ञात्वा भाग्येनोपलब्धात् अन्नादेः परितुष्टात्मा ईहारहितोऽहमस्मि बहुदिनं यावन्महाहिरिव अजगर इव नाहं स्वपिमि। दैवाल्लब्धं कदाचिद्बहु कदाचिदल्पं कदाचित् स्वादयुतं कदाचिच्च स्वादरहितं अन्नमहं खादामि, क्वचिच्च बहुगुणयुतं क्वचिच्च गुणरहितमन्नं लभ्यते। कुत्रचित्श्रद्धयादत्तं, कुत्रचिच्चापमानेनदत्तमन्नं खादामि कस्मिंश्चिद्दिनेदिवालब्धं कदाचिच्चरात्रौ लब्धान्नं भुक्त्वाशये न चिन्तयाग्रस्तो भवामि। कदाचिदतसीतन्तुनिर्मितं क्षौमं वस्त्रं कदाचिच्च कार्पासनिर्मितां वस्त्रं कुत्रचित् वस्त्रखण्डं (चिथड़ा इति भाषायां प्रसिद्धम्) कुत्रचित् चर्म कदाचिच्च वृक्षत्वगहं प्रारब्धभुक् परिदधे तथाप्यहं तुष्टधीरस्मि। कदाचिद् भगवदिच्छया शुष्कभूमौ, तृणोपरि, शुष्कपर्णेषु कदाचित् पाषाणोपरि कुत्रचित् भस्मचये कदाचित् प्रासादोपरि कुत्रचिच्च तूलिका विष्टरेऽहं स्वपिमि तथापि नोद्विजे। कदाचित् कृतस्नानः कुत्रचित् चन्दनचर्चितः क्वापि दिव्यवस्त्रधारी कर्हिचित् स्रग्वी कदाचित् अलङ्कारैलङ्कृतः क्वापि च पिशाचवत् नग्नः सन् गजमारूह्य रथमारूह्याश्व–मारूह्य च विचरे तथापि दुःखं नानुभवामि। स्वभावेन विषयं जनं न निन्दामि न च स्तौमि पुनस्तेषामनुकूलप्रतिकूलानां समेषां ऐहिकं कल्याणं वाञ्छामि पुनः परत्र भगवति सायुज्यमिच्छामि। किमधिकं हे भक्त प्रवर! एवंभूतस्थितौ उपायं विवृणोति – यथा विकल्पं भेदव्यवहारं चित्तौ भेदग्राहकमनोवृत्तौ तां चित्तिं अर्थानां देहादीनां विविधं भ्रमणं यस्मात्तस्मिन् मनसि मनो वैचारिक अहङ्कारे तच्चाहङ्कारं महतिमहत्तत्त्वे महत्तत्त्वञ्च मायायां मूलप्रकृतौ जुहूयात् प्रलीनं भावयेत्। ताञ्च मायां आत्मानुभूतौ ब्रह्मणि भावयेत् ततः सत्यं परमात्मानं पश्यतीति सत्यदृक् कृदात्मसाक्षात्कारो मुनिः स्वानुभूत्या परमात्मनि स्थितः निश्चेष्टः साधनाद्विरमेत्। हे असुरराज! इत्थमात्मवृत्तं रहस्यात्मकं लोकशास्त्राभ्यां मन्ददृष्ट्या रहितं न तु तत्त्वदृष्ट्या वर्णितम्, भवान्तु भगवतोऽनन्य भक्तः।

इत्थं मुनेः सकाशात् परमहंस्यं धर्मं श्रुत्वा प्रह्लादः प्रसन्नो भूत्वा मुनिं सम्पूज्य तं पृष्ट्वा च स्वगृहं जगाम।[१]

१. वेदेदमसुरश्रेष्ठ! भवान् नन्वार्यसम्मतः।
ईहापरमयो नृणां पदान्यध्यात्मचक्षुषा॥
यस्य नारायणो देवो भगवान् हृद्गतः सदा।
भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत्॥
अथापि ब्रूमहे प्रश्नांस्तव राजन् यथाश्रुतम्।
सम्भावनीयो हि भवानात्मनः शुद्धिमिच्छताम्॥
तृष्णया भववाहिन्या योग्यैः कामैरपूरया।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः॥
यदृच्छया लोकमिमं प्रापित कर्मभिर्भ्रमन्।
स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च॥
अत्रापि दम्पतीनां च सुखायान्यापनुपत्तये।
कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम्॥
सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः।
मनः संस्पर्शजान् दृष्ट्वा भोगान् स्वप्स्यामि संविशन्॥
इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान्।
विचित्रामसति द्वैते घोरामाप्नोति संसृतिम्॥
जलं तदुद्भवैश्छन्नं हित्वाज्ञो जलकाम्यया।
मृगतृष्णामुपाधावेद् यथान्यत्रार्थदृक् स्वतः॥
देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः।
दुःखात्ययं चानीशस्य क्रिया मोघाः कृताः कृताः॥
आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित्।
मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम्॥
पश्यामि धनिनां क्लेशं लुब्धानामाजितात्मनाम्।
भयादलब्धनिद्राणां सर्वतोऽभिविशङ्किनाम्॥
राजतश्चोरतः शत्रोः स्वजनात् पशुपक्षितः।
अर्थिभ्यः कालतः स्वजनान्नित्यं प्राणार्थवद्भयम्॥
शोकमोहभयक्रोधरागक्लैव्यश्रमादयः।
यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयो बुधः॥
मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ।
वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम्॥

क्रमशः अग्रे पृष्टे ...

## (४) भागवतधर्मः

यदि नः श्रुतये क्षमं स्यात् तर्हि भागवतान् धर्मान् ब्रूहि इति विदेहेन पृष्टो हरिरुवाच — आत्मनः स्वस्य प्रियो यो भगवान् तस्य सत्तां सर्वप्राणिषु पश्येत्। भूतानि च

क्रमशः .....

विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात्।
कृच्छ्राप्तं मधुवद् वित्तं हत्वाप्यन्यो हरेत् पतिम्।।
अनीहः परितुष्टात्मा यदृच्छोपनतादहम्।
नो चेच्छये बह्वहानि महाहिरिव सत्ववान्।।
क्वचिदल्पं क्वचिद् भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा।
क्वचिद् भूरि गुणोपेतं गुणहीनयुतं क्वचित्।।
श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम्।
भुञ्जे भुक्त्वाऽथ कस्मिंश्चिद् दिवानक्तं यदृच्छया।।
क्षौमंदुकूलमजिनं चीरं वल्कलमेव वा।
वसेऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम्।।
क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु।
क्वचित् प्रासादपर्यङ्के कक्षिपौ वा परेच्छया।।
क्वचित् स्नातोऽनुलिप्ताङ्ग सुवासाः स्रग्व्यलंकृतः।
रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो!।।
नाहं निन्दे न च स्तौमि स्वभावविषमं जनम्।
एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि।।
विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे।
मनो वैकारिके हुत्वा तन्मायायां जुहोत्यनु।।
आत्मानुभूतौ तां मायां जुहुयात् सत्यदृङ्मुनिः।
ततो निरीहो विरमेत् स्वानुभूत्याऽऽत्मनि स्थितः।।
स्वात्मवृत्तं नयेत्थं ते सुगुप्तमपि वर्णितम्।
व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत् परः।।
धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः।
पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम्।।

—श्रीमद्भागवते स.स्क.१३अ.श्लो.२०—४६

आत्मनि स्वमनसि स्फुरिते भगवति पश्येत् एतद्धर्मवान् यो भवति स भागवतोत्तम् इत्युच्यते। ईश्वरे प्रेम, हरिभक्तेषु मैत्रीं अज्ञेषु कृपां शत्रुषु च य उपेक्षां करोति एवं धर्मवान् मध्यम भागवत् इत्युच्यते। प्रतिमायामेव श्रद्धया यो हरये पूजां करोति, अन्येषु तद्भक्तेषु गोब्रह्मणादिषु पूजां न करोति एवं धर्मवान् कृत भक्त्यारम्भो भागवत: प्रोक्त: इन्द्रियैर्विषयान् गृहीत्वाऽपि यो न द्वेष्टि न चानन्दी भवति, इदं सर्वं विष्णोर्मायामस्ति इति पश्यन् वर्तते स एवं धर्मवान् भागवतोत्तम: कथ्यते। यो हरे: स्मृत्या संसारधर्मैर्यथा – देहस्य जन्मनाशौ प्राणस्य क्षुत्पिपासादिमनसो भयम्, बुद्धेस्तृष्णा इन्द्रियाणां श्रमादयस्तैरविमुह्यमानो भवति एवं धर्मवान् योऽस्ति स भागवतप्रधान इत्युच्यते। पूर्व: काम: भोगेच्छा तत: कर्माणि ततो वासना ताभिरूत्पत्तिर्यस्य मनसि न भवति, एवं धर्मवानपि यश्च केवलं वासुदेवाधार: सोऽपि भागवतोत्तम इत्युच्यते। एभिरूत्तरैर्भक्तो यथाऽऽचरतीत्यस्योत्तरमुक्तम्। यस्य सत्कुले जन्म तेन तप आदि कर्मणा ब्राह्मणादि वर्णेन ब्रह्मचर्याद्याश्रमेण चास्मिन् देहेऽहङ्कारो न लिप्तो न भवति एवं धर्मवान् यो भवति स च हरे: प्रिय इति कथित:। यस्य धनेषु स्वकीयं परकीयमिति आत्मनि च स्वकीय परकीय इति भेदो न भवति। यश्च सर्वभूतसम: शान्तश्चैवं धर्मवान् स निश्चयेन भागवतोत्तम इत्युक्त:। त्रैलोक्यराज्यप्राप्त्यर्थमपि यस्य प्रलोभयितुमशक्या मतिरजितात्मसुरादिभिरन्वेषणीयात् श्रीकृष्णचरणारविन्दाद् विचलिता न भवति एवं धर्मवान् स वैष्णवेषु भगवद्भक्तेषु मुख्य इत्युच्यते। भगवद्भजनं कुर्वतां जनानां भगवतो महापराक्रमशीलचरणाङ्गुलिनखचन्द्रिकया निवारिततापे हृदि कथं ताप: प्रभवेत् न कथमँपीति भाव:। श्रद्धाराहित्येनाप्युच्चारितमात्र प्रेमरज्वागृहीतचरणकमल: साक्षाद्धरिर्यस्य

हृदयं न विमुञ्चति, एवं धर्मवान् सभागवत प्रधान इत्युक्तः।[1]



---

१. धर्मान् भागवतान् ब्रूत यदिनः श्रुतये क्षमम।

हरिरुवाच

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः।।
ईश्वरे तदधीनेषु वालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः।।
अर्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः।।
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः।।
देहेन्द्रियप्राणमनोधियां यो जन्माऽप्ययक्षुद्भयतर्षकृच्छ्रैः।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः।।
न कामकर्मवीजानां यस्य चेतसि सम्भवः।
वासुदेवैकनिलयः स वै भागवतोत्तमः।।
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः।
सज्जतेऽस्मिन्नहंभवो देहे वै स हरेः प्रियः।।
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः।।
त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः।।
भगवत ऊरुविक्रमाङ्घ्रिशाखा नखमणिचन्द्रिकया निरस्ततापे।
हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः।।
विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोप्यघौघनाशः।
प्रणयरशनया धृताङ्घ्रिपद्मः स. भवति भागवतप्रधान उक्तः।।

— श्रीमद्भागवते एकादशस्कन्धे द्वितीयेऽध्याये, श्लोक ३१, ४५—५५

# तृतीयोऽध्यायः

१. आपद्धर्मः
२. राजधर्मः
३. प्रजाधर्मः
४. नारीधर्मः

# तृतीयोऽध्यायः

## (१) आपद्धर्मः

"आपन्मूलक आपद्धर्मः।[1]"

आपद्धर्मो हि विपत्तिमूलको भवति। स चापद्येव विधीयते। अत्र भावशुद्धिमुद्दिश्या—धर्मकार्यमपि धर्मकार्यवद्विधेयत्वेन प्रतिपादितम्। स्मृतौ यथा —

आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः।
स नाप्नोति फलं तस्य परत्रेति विचारितम्।।
देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि।
रक्षेदेव स्वदेहं वै पश्चाद्धर्मं समाचरेत्।।
येन केन च धर्मेण मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं पश्चाद्धर्मं समाचरेत्।।
आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत्।
स्वयं समुद्धयेत् पश्चात् स्वस्थो धर्मं समाचरेत्।।

प्रसङ्गोपात्तां शङ्कासमाधत्ते — "तत्राऽधर्मोऽपि धर्मो भावशुद्धेः"।[2]

आपद्धर्मो हि बाह्यरुपेणाधर्मवत् प्रतीयते। ननु अधर्मप्रतीतिजनकापद्धर्मस्य कथं धर्मसंज्ञकत्वमिति चेन्नैवं, धर्मो हि भावशुद्धिमपेक्षते, तदानीञ्च तस्या जागरूकत्वान्न

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् २५*

२. *कर्ममीमांसादर्शने, धर्मपादेसूत्रम् २७*

काऽप्यनुपत्तिः। तदेव समाहितं महर्षिणा सूत्रकारेण सूत्रमिदमाविर्भाव्य। स्मर्य्यतेऽप्यत्रः—

भावतत्त्वस्य विज्ञानं पूर्णरूपेण वेदितुम्।
अन्तःकरण विज्ञानस्वरूपं वच्मिवोऽग्रतः।।
मनोबुद्धिरहङ्कारश्चित्तमेतच्चतुर्विधम्।
अन्तःकरणमस्तीति वित्त यूयं पितृव्रजाः।।
मनसोऽन्तर्विभागोऽस्ति चित्तञ्चाहंकृतिर्धियः।
मायापाशैर्दृढैर्बध्वा योषित् संसारगोचरम्।।
यथा संसारिभिर्जीवैः कार्यं कारयतेऽनिशम्।
तथा चित्तं मनोबुद्धिमहङ्कारो नियम्य च।।
कार्यं कारयते शश्वन्नानावैचित्र्यसंकुलम्।
संस्काराऽनुचरा जीवा वर्तन्ते सर्वथा खलु।।
वासनोत्पन्नसंस्कारा अभिवघ्नन्ति प्राणिनः।
आसक्तिरेव साक्षात्स्यात् बन्धस्यास्य तु कारणम्।।
संस्कारो वासनाजन्यः संस्कारात् कर्म जायते।
वासनोत्पद्यते भूयः कर्मणो नाऽत्र संशयः।।
वासनातो पुनर्विज्ञाः! संस्कारो जायते ध्रुवम्।
सदैवं वासनाचक्रं जीवानाञ्च गतागतम्।।
घूर्णायमानमस्तीह चक्रनेमिर्यथारथे।
पूर्वजन्मार्जिता यादृक् कर्मसंस्कारसंततिः।।
एतज्जन्मकृतानां वा कर्मणां यादृशी स्मृतिः।
अङ्किता जीवचित्ते स्यादासक्तिरपि तादृशी।।
तदासक्त्यनुरूपेषु विषयेषु निरन्तरम्।
प्रसज्जन्तेऽभितो जीवास्तदासक्त्यनुसारतः।।
आसक्तिश्चित्तसाहाय्यान्मनस्युत्पद्यते ध्रुवम्।
दम्पत्योः संगमाल्लोके मनश्चित्त स्वरूपयोः।।
आसक्ते र्जायते जन्म नाऽत्र कार्या विचारणा।
प्रजातन्तुं यथा पुत्रः संरक्षँल्लभते पितुः।।

सर्वाधिकारमासक्ति विभ्राणा विषयांस्तथा।
सृष्टिं वर्द्धयते शश्वदिह दैवीं च मानवीम्।।
बुद्धिसृष्टेस्तु सिद्धान्तमपरं वित्त साम्प्रतम्।
बुद्ध्यहङ्कारसंयोगाद् भावतत्त्वोदयो भवेत्।।
भावोऽपि द्विविधो ज्ञेय: शुद्धाशुद्धप्रभेदत:।
भावोऽशुद्धस्तत्र बुद्धिं विधत्ते विषयाऽऽकृतिम्।।
शुद्धोभाव: क्रमाच्चित्तं कुर्वाणो निर्मलं तथा।
बुद्धिं ब्रह्मपदं नूनं नयञ्छान्तिं प्रयच्छति।।
आसक्ति वसगा जीवा अथवा भावनोदिता:।
एतत्तत्वद्वयस्यैव साहाय्यात् कर्म कुर्वते।।
कायिकं वाचिकं चैव तथा मानसमेव च।
आसक्तौ किन्तु वैवश्वं भावे स्वातन्त्र्यमस्तिह।।
आनन्त्यात् विषयाणां तु बहुशाखासमन्विता।
आसक्तिर्विद्यते नूनं शुद्धो भावो न तादृश:।।
अतोऽद्वैतदशां नेतुमीष्टेऽसौ नाऽत्र संशय:।
यतो ब्रह्मपदंविज्ञा:! विद्यतेऽद्वैतमेव हि।।
आसक्त्या कार्यकर्तारो जीवा: प्रारब्धयोगत:।
श्रीगुरोर्देवतानां वा प्रसादादेव सर्वथा।।
पाश तुल्याद्धि विषयात् स्वान् निवर्तयितुं क्षमा:।
अन्यथा विषये तेषां प्रसक्तिस्तत्र निश्चिता।।
किन्तु शुद्धस्य भावस्य साहाय्यात् कार्यकारिण:।
भाग्यवन्तो न सज्जन्ते विषयेषु कदाचन।।
उत्तरोत्तरमेतेषां सर्वथोर्ध्वगतिर्भवेत्।
संगृहीता हि संस्कारा: पूर्वजन्मनि यादृशा:।।
आसक्तिस्तादृशी जीवे प्रादुर्भवति निश्चिता।
तस्या एवानुसारेण जीवधर्मे जनिष्यते।।

हेयोपादेयताज्ञान नास्ति कोऽप्यत्र संशयः।
असत्यमपि सत्यं स्यात् प्रोक्तं जीवहिताय वै।।
अधर्मो जायते धर्मः पशुहिंसा यथाऽध्वरे।
यात्येवं भावसम्बन्धाच्चैतन्यं जडतायिह।।
सत्यं मिथ्या भवेद्धर्मो जायतेऽधर्मरुपभाक्।
भावशुद्धिसमायुमसत् कर्माऽप्यतो ध्रुवम्।।
आपद्धर्मे भजत्येव सद्धर्मत्वं न संशयः।
विद्यत्तेऽदश्च जीवानां मङ्गलं परमं सदा।।
गतिः सूक्ष्माऽस्ति धर्मस्य भवन्तोऽतः पितृव्रजाः।
कुर्युश्चेत् कर्म मच्चित्ता भावशुद्धिपुरःसरम्।।
अधिकुर्य्युस्तदावश्यं पूर्ण धर्म सनातनम्।
मन्त्राणां प्रणया सेतुर्मथा मन्त्रच्युतिं किल।।
अपनोद्याशु सम्पूर्णा दत्त मन्त्राधिकारिताम्।
तथैव भावसंशुद्ध्या शक्तिधर्मस्य धारिका।।
सन्तिष्ठते सदाऽक्षुण्णा नितरामूर्ध्वगामिनी।
कदाचिदत एवालमापद्ध्धर्मस्य निर्णये।।
अधर्मेणापि धर्मस्य स्वरूपे परिणम्यते।।

कदाऽयमाश्रणीय इत्याहः —

**"अयमाश्रेयः कालाऽन्यथाभावे[1]"**

नन्वापतकालेऽधर्मस्य धर्मत्वे निश्चितेऽपि कथमस्योपयोगावसर इति शङ्कामनेतुं सूत्रमिदमवतारयति भगवान् सूत्रकारः —

कालस्य अन्यथाभावे वैपरीत्ये अयं आपद्धर्मः आश्रीयते इत्याश्रय आश्रयणीय इत्यर्थः।

---

१. कर्ममीमांसादर्शने धर्मपादे सूत्रम् २७

आपत्काले ह्युपस्थिते सङ्करापन्नस्य पुंसः सर्वथा विशेषधर्मसाधनाऽसम्भवेऽस्य धर्मस्याश्रयणावसरो ज्ञेयः। केवलमापत्कालाश्रयणीयत्वादेवायमापद्धर्मो निगद्यते नास्त्य–वसरोऽस्याऽनापत्काले। अनुकूले देशे कालेऽनुकूलायां वा परिस्थितौ सर्वेषामेव विशिष्ट–धर्माणां पालनं सुशक्यमेव। विरुद्धे हि देशकाले तत्रापि च विशेषतः कालसङ्करे ह्युपस्थिते धर्मभीरूरपि साधकः सर्वथा धर्मसङ्करे पतितोऽसमर्थो धर्ममिमाश्रयतीति प्रागपि विस्तरशो विवेचितमेव। स्मृतिष्वपि बहुशः उपलभ्यते, तद्यथा –

तस्मिन् प्रतिभये काले क्षते धर्मे युधिष्ठिरः।
बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परम्।।
विश्वामित्रो भगवान् महर्षिरनिकेतनः।
क्षुधापरिगतो धीमान् समन्तात् पर्यधावत।।
स कदाचित् परिपतन् श्वपचानां निवेशनम्।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित्।।
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्यकौशिकः।
पपात भूमौ दौर्बल्यात् तस्मिन् चाण्डालपक्वणे।।
स चिन्तयामास मुनिः किन्तु मे सुकृतं भवेत्।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम!।।
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः।
चाण्डालस्य गृहे राजन्! सद्यः शस्त्रहतस्य वै।।
स चिन्तयामास तदा स्तैन्यं कार्यमितो मया।
नहीदानीमुपायो मे विद्यते प्राणधारणे।।
आपत्सु विहितं स्तैन्यं विशिष्टं च महीयसः।
विप्रेणप्राणरक्षार्थं कर्त्तव्यमिति निश्चयः।।
हीनादादेयमादौ स्यात् समानात्तदनन्तरम्।
असम्भवे वाऽददीत विशिष्टादपि धार्मिकात्।।

सोऽहमन्त्यावसानायां हराम्येनां प्रतिग्रहात्।
न स्तैन्यदोषं पश्यामि हरिष्यामिश्वजाघनीम्।।

इत्येवं विचिन्त्य महर्षि विश्वामित्रो रात्रौ तथैव सुष्वाप। अनन्तरञ्च निशीथे निद्रितेषु चाण्डालपरिवारेषु शनैः श्वमांसापहरणकाम्यया पक्वणं प्रविष्टं पुरुषमवलोक्य अवबुद्ध–श्चाण्डालो जगर्ज। कोऽयमपजिहीर्षयामद्गृहं प्रविष्टो मद्हस्तेन स्वप्राणान् परिहातुं पर्युत्सुक इति। तच्छ्रुत्वा भीतभीतोऽतिह्रित्वोमुनिरुवाच – अहं विश्वामित्रो मुनिः क्षुधार्तस्तव गृहं प्रविष्टः। साधुदर्शीत्वं कथम्मं हन्तुमुद्यतः। विश्वामित्रस्य वचो निशम्य त्रस्तोऽवसन्न–चेताश्चाण्डालः शय्यां त्यक्त्वा भूमिं परिगतो वद्धाञ्जलि वेंपमानः सगद्गद्मुवाच। भगवन्नस्मिन् सूचीभेद्ये तमसि निशीथे किमत्रागमनकारणम्? विश्वामित्र उवाचः –

क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम्।
क्षुधितः कलुषं जातो नास्ति ह्रीरशनार्थिनः।।
अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये।
तदा बुद्धिः कृता पापे हरिष्यामिश्वजाघनीम्।।
अग्निर्मुखं पुरोधाश्च देवानां शुचिवद्विभुः।
यथा वै सर्वभुक् ब्रह्मा तथा मां विद्धि धर्मतः।।

ततश्चाण्डालोऽवदतः –

शृङ्गालादधमं श्वानं प्रवदन्ति मनीषिणः।
तस्याप्यधम उद्देशः शरीरस्य श्वेजाघनी।।
नेदं सम्यग् व्यवसितं महर्षे धर्मगर्हितम्।
चाण्डालस्य स्वहरणममव्यस्य विशेषतः।।
साध्वन्यमनु पश्य त्वमुपायं प्राणधारणे।
न मांसलोभात्तपसो नाशस्तेस्यान्महामुने:।।
जानता विहितं धर्मं न कार्यो धर्मसङ्करः।
मास्य धर्मं परित्याक्षीस्त्वं हि धर्मभृतोवरः।।

वह्वेवं प्रलपन्तन्तं विश्वामित्रोऽव्रवीन्मुनिः।
निराहारस्य सुमहान् मम कालोऽभिधावतः।।
न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे।
येन येन विशेषेण कर्मणा येन केनचित्।।
अभ्युज्जीवेत् साद्यमानः समर्थो धर्ममाचरेत्।
ऐन्द्रोधर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः।।
ब्रह्मवह्निर्मम वलं भक्ष्यामि शमयन् क्षुधाम्।
यथा तथैव जीवेद्धितत्कर्त्तव्यमहेलया।।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात्।
सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यपि भक्षणम्।।
व्यवस्ये बुद्धिपूर्वं हि वै तद्भवाननुमन्यताम्।
बलवन्तं करिष्यामि प्रणोत्स्याम्यशुभानि च।।
तपोभि र्विधया चैव ज्योतींषि वा महत्तमः।।

ततः पुनः पुल्कसो जगादः —

नैतत् खादन् प्राप्नुते दीर्घमायुर्नैव प्राणान्नामृतस्येव तृप्तिः।
भिक्षामन्यां भिक्ष माते मनोऽस्तु श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम्।।

पुनरुवाच मुनिः —

न दुर्भिक्षे सुलभं मांसमन्यत् श्वपाक! मन्ये न च मेऽस्ति वित्तम्।
क्षुधार्तश्चाहमगतिर्निराशः श्वमांसे चास्मिन् षड्रसान् साधु मन्ये।।
स्थाने भवेत् स यशः प्रेत्यमाणे निःसंशयः कर्मणां वै विनाशः।
अहं पुनर्व्रतनित्यः शमात्मा मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम्।।
बुद्धात्मके व्यक्तमस्तीतिपुण्यं मोहात्मके यत्र तथाश्वभक्ष्ये।
यद्यप्येतत् संशयात्मा चरामि नाहं भविष्यामि यथा त्वमेव।।

एवमभिधायापहृतश्वमांसो मुनिः स्वकुटजमागत्य कृतनित्यक्रियोऽचिन्तयत् —

अथास्य बुद्धिरभवत् विधिनाहं श्वजाघनीम्।
भक्षयामि यथाकामं पूर्वं सन्तर्प्य देवताः।।

ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः।
ऐन्द्राग्नेयेन विधिना चरुमश्रपयत् स्वयम्।।
ततः समारभत् कर्म दैवं पित्रञ्च भारत!।
आहूय देवान् इन्द्रादीन् भागं भागं विधिक्रमात्।।
एतस्मिन्नेव काले तु प्रववर्ष स वासवः।
सञ्जीवयन्प्रजाः सर्वा जनयामास चौषधीः।।
विश्वामित्रोऽपि भगवान् तपसा दग्धकिल्विषः।
कालेन महता सिद्धिमवाप परमाद्भुताम्।।
स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः।
तोषयामास देवांश्च पितृंश्च द्विजसत्तमः।।

## (२) राजधर्मः

राजा ग्रामस्याधिपति, दशग्रामाधिपं, शतग्रामाधिपमन्यञ्च विषयेश्वरं कुर्यात्। तेषां कर्मानुरूपं भोगविभागश्च भवेत्, नित्यमेव तेषां चारैः परीक्षणं कार्यम्। ग्रामे समुत्पन्नान् दोषान् ग्रामेशः प्रशमं नयेत्। अशक्तश्चेत् दशपालं निवेदयेत्।[1]

दशपालोऽपि विनादं श्रुत्वा तत्प्रशमार्थ उपायमाचरेत्। राजा सुरक्षिताद् विषयात् वित्तामाप्नोति। धनवान् धर्ममाप्नोति, धनवान् काममश्नुते अर्थे विना सर्वाः क्रिया तथैव नश्यन्ति यथा ग्रीष्मे सरित्। धनहीनस्य एका भार्य्यापि उपावर्तिनी न स्यात् का कथा समेषाम्। राष्ट्रपीडांकरो राजा चिरं नरके तिष्ठति। तस्य राज्ञस्तपसा यज्ञैश्च किं प्रयोजनम्,

---

१. ग्रामस्याधिपतिं कुर्याद् दशग्रामाधिपं नृपः। शतग्रामाधिपञ्चात्यं तथैव विषयेश्वरम्।।
तेषां भोगविभागश्च भवेत् कर्मानुरूपतः। नित्यमेव तथा कार्यं तेषाञ्चारैः परीक्षणम्।।
ग्रामे दोषान् समुत्पन्नान् ग्रामेशः प्रशमं नयेत्। अशक्तो दशपालस्य स तु गत्वा निवेदयेत्।।
— (अग्निपुराणे २२३ अध्याये, श्लोक १—३

यस्य प्रजा रक्षिता न स्यात्। यस्य प्रजा सुरक्षिता भवन्ति। तस्य राज्ञः स्वर्गो गृहोपमो भवति। राजा सुकृताद् दुष्कृतादपि षड्भागमादत्ते। रक्षणात् धनाप्तिस्तथाऽरक्षणात् पापमाप्नोति। विशेषतो कायस्थैर्भक्ष्यमाणाः प्रजाः सदा राज्ञा संरक्ष्या भवन्ति। तद्भयेभ्यो रक्षिता प्रजा राज्ञो भवति। अरक्षिता सती तेषामेव भोजनं जायते। सदा दुष्टानां मर्दनं कार्यम्, शास्त्रोक्तं करमाददेत्। अर्द्धं कोषे प्रवेशयेत् अर्द्धञ्च द्विजे दद्यात्। द्विजोत्तमोऽपि निधिं प्राप्य वर्णक्रमेण चतुर्थमष्टमं षोडशभागञ्च धर्मतः पात्रे दद्यात्। अनृतं वदन् सुवित्तस्याष्टमांशं दण्ड्यो भवेत्। प्रनष्ट स्वामिकं धनं राजा स्वपार्श्वेऽद्वत्रयं यावत् निधापयेत्। त्र्यद्वादर्वाक् स्वामी हरेत्, परेण नृपतिर्हरेत्। रूपसंख्यादीन् सम्पाद्य यो ममेदं धनमिति ब्रूयात् तदा स्वामी तद् द्रव्यमर्हति। राजा वालदायादिकं धनं तावदनुपालयेत् यावत् स समावृत्तोऽतीत शैशवः स्यात्। बालपुत्रासु निष्कुलासु प्रतिव्रतासु विधवासु आतुरासु च स्त्रीषु एवमेव धनं रक्षणीयं स्यात्। जीवन्तीनां तासां धनं ये स्वबान्धवाः संहरेयुश्चेत्तान् धार्मिको नृपतिः चौरदण्डेन शिष्यात्। सामान्यतश्चौरैर्हृतं धनं राजा स्वयं दद्यात्। राजापि हृतं तद्धनं चौररक्षाधिकारिभ्यो गृह्णीयात्। अहृते धने यो हृतंमिति ब्रूयात् स देशतो निस्सार्य्यः।[1]

---

१. श्रुत्वाऽपि दशपाल्लोऽपि तत्र युक्तिमुपाचरेत्। वित्ताद्याप्नोति राजा वै विषयात् तु सुरक्षितात्।।
धनवान् धनमाप्नोति धनवान् काममश्नुते। उच्छिद्यन्ते बिनाह्यर्थैः क्रिया ग्रीष्मे यथा सरित्।।
धनहीनस्य भार्य्याऽपि नैकास्यादुपवर्त्तिनी। राष्ट्रपीडाकरोराजा नरके वसते चिरम्।।
किं यज्ञैस्तपसा तस्य प्रजा यस्य न रक्षिताः। सुरक्षिता प्रजा यस्य स्वास्तितस्य गृहोपमः।।
अरक्षिता प्रजा यस्य नरकं तस्य मन्दिरम्। राजा षड्भागमादत्ते सुकृताद् दुष्कृतादपि।।
धर्मागमो रक्षणाच्च पापमाप्नोत्यरक्षणात्। भक्ष्यमाणाः प्रजारक्ष्याः कायस्थैश्च विशेषतः।।
रक्षिता तद्भयेभ्यस्तु राज्ञो भवति सा प्रजा। अरक्षिता सा भवति तेषामेवेह भोजनम्।।
दुष्टसम्मर्दनं कुर्याच्छास्त्रोक्तं करमाददेत्। कोषे प्रवेशयेदर्द्धं नित्यञ्चार्द्धं द्विजे ददेत्।।
निधिं द्विजोत्तमः प्राप्य गृहगीयात् सकलं तथा। चतुर्थमष्टमं भागं तथा षोडशमं द्विजः।।
वर्णक्रमेण दद्याच्च निधिं पात्रे तु धर्मतः। अनृतन्तु वदन् दण्ड्यः सुवित्तस्यांशमष्टमम्।।
प्रनष्टस्वामिकं ऋक्थं राजात्र्यद्वं निधापयेत्। अर्धाक्त्र्यद्वाद्धरेत् स्वामी परेणनृपतिर्हरेत्।।
ममेदमिति यो ब्रूयात् सोऽर्थयुक्तो यथाविधि। सम्पाद्यरुपसंख्यादीन् स्वामी तद् द्रव्यमर्हति।।
वालदायादिकं ऋक्थं तावद्राजानुपालयेत्। यावत् स्यात् स समावृत्तो यावद्वातीत् शैशवा।।
बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च। पविव्रतासुच स्त्रीषु विधवास्वातुरासु च।।
जीवन्तीनान्तुतासां ये संहरेयुः स्वबान्धवाः। ताच्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः।।
सामान्यतो हृतञ्चौरैस्तद्वैदद्यात् स्वयं नृपः। चौररक्षाधिकारिभ्यो राजापि हृतमाप्नुयात्।।
अहृते योहृतं ब्रूयात् निःस्सार्य्यो दण्ड्य एव सः।
—(अग्निपुराणे २२३ अध्याये, श्लोक ४–२२)

गृहे गृहणैरेव हृतं यद्धनं तद्राज्ञा न प्रदातव्यम्। राजा स्वराष्ट्रपण्यात् विंशतितमं गृह्णीयात्। परदेशात् क्षयव्ययप्रकाशकं वणिक् यल्लाभमाप्नुयात् तस्माल्लाभात् उचितं शुल्कं ज्ञात्वा संकल्पयेत्। निश्चित्य च विंशांशं शुल्कं गृह्णीयात्। अन्यथा स वणिक् दण्डनीयः स्यात्। प्रव्रजितानां स्त्रीणां शुल्कं विवर्जयेत्। दासदोषेण नष्टं दासांस्तु दापयेत्। शूकधान्येषु षड्भागं तथा शिग्निधान्येऽष्टमं गृह्णीयात्। वन्यार्थं राजा देशकालानुरूपकम् पशुहिरण्ययोः पञ्चषड्भागमादद्यात्। गन्धौषधिरसानांपुष्पमूलफलस्य पत्रशाकतृणानां वंशवैणव– चर्मणाम्, वैदलानां भाण्डानां सर्वस्याश्ममयस्य मधुमांसस्य सर्पिषश्च षड्भागमेवादद्यात्। म्रियन्नपि राजा ब्राह्मणेभ्यः यर न गृह्णीयात्।

यस्य राज्ञः राज्ये श्रोत्रियः क्षुधा सीदति तस्य तद्राष्ट्रं व्याधि दुर्भिक्षतस्करैः सीदतीति नाऽत्र संशयः। तस्य श्रुते वृत्तं च विज्ञाय आजीविकां राजा प्रकल्पयेत्। राजा सर्वसत्त्वेन पिता औरसं पुत्रमिव तं श्रोत्रियं संरक्षेत्। राज्ञा संरक्ष्यमाणः स श्रोत्रियः प्रतिदिनं धर्मं कुरुते, तेन धर्मेण राज्ञ आयु र्द्रविणं राष्ट्रं च वर्द्धते। शिल्पिनो राज्ञो मासेन एकं दिनं निःशुल्कं कार्यं कुर्युः।[१]

---

१. न तद्राज्ञा प्रदातव्ये गृहेयद् गृहणैर्हृतम्। स्वराष्ट्र पथ्यादादद्यात् राजा विंशतिमं द्विज!।।
शुल्कांशं परदेशाच्च क्षयव्ययप्रकाशकम्। ज्ञात्वा संकल्पयेच्छुल्कं लाभं वणिक् यथाप्नुयात्।।
विंशांशं लाभमादद्यात् दण्डनीयस्ततोऽन्यथा। स्त्रीणां प्रव्रजितानां च करशुल्कं विवर्जयेत्।।
करेषु दासदोषेण नष्टं दासांस्तु दावयेत्। शूक धान्येषु षड्भागं शिम्बिधान्ये तथाष्टमम्।।
राजावन्यार्थमादधात् देशकालानुरूपकम्। पञ्चषड्भागद्यादधात् राजा पशुहिरण्ययोः।।
गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च। पत्रशाकतृणानाञ्च वंशवैणव चर्मणाम्।।
वैदलानाञ्च भाण्डानां सर्वस्याश्ममयस्य च। षड्भागमेव चादद्यान्शमधुमांसस्य सर्पिषः।।
म्रियन्नपि न चादद्यात् ब्राह्मणेभ्यस्तथाकरम्। यस्य राज्ञस्तुविषये श्रोत्रियः सीदति क्षुधा।।
तस्य सीदति तद्राष्ट्रं व्याधिदुर्भिक्ष तस्करैः। श्रुतं वृत्तन्तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत्।।
रक्षेच्च सर्वसत्त्वेन पिता पुत्रमिवौरसम्। संरक्ष्यमाणो राज्ञायः कुरुते धर्ममन्वहम्।।
तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च। कर्म कुर्य्युर्नरेन्द्रस्य मासेनैकञ्च शिल्पिनः।।
—(अग्निपुराणे २२५ अध्याये, श्लोक २३—३३)

धर्ममूलोऽर्थशाखः कर्मफलो महान् त्रिवर्गपादको वर्तते, तत्र रक्षया राजा फलभाक् भवेत्। स्त्रियः कामाधीनाभवन्ति। तदर्थमर्थसंग्रहः करणीयः। विषयिणा राज्ञा ताः सेव्या किन्तु आत्महितैषिणा ता नातिसेव्या। आहारो मैथुनं निद्रा नाधिकं सेव्या यतो हि रुग् जायते। राजा सदा स्त्रीणां रक्षणं कुर्यात्, किन्तु तासामुपरि नाति विश्वसेत् विशेषतः पुत्रमातुरुपरि नाति विश्वसेत्। रात्रौ स्त्रीगृहे न स्वपेत्। यतोहि तासां कृत्रिमो विश्वासो भवेत्।[१]

राज्ञा राजपुत्रस्य रक्षा कर्त्तव्या। धर्मार्थकामशास्त्राणि धनुर्वेदञ्च शिक्षयेत् शिल्पानि च शिक्षयेत्। मिथ्याप्रियम्बदैराप्तैः शरीररक्षाव्याजेन राजपुत्रस्य कृते रक्षिणो नियोजयेत्। अस्य क्रुद्धलुब्धविमानितैः सहसङ्गो न दातव्यः। यदि गुणाधानं कर्तुं अशक्यञ्चेत् तदा सुखैर्बन्धयेत्। सर्वेष्वपि अधिकारेषु विनीतं जनमेव नियोजयेत्। मृगयां यद्पानं अक्षांश्चैतत्त्रयं राज्यनाशमस्ति अतो त्रयमेतन्नृपो वर्जयेत्। दिवास्वप्नं वृथाऽटनम् वाक् पारुष्यं निन्दां दण्डपारुष्यं अर्थदूषणञ्च नृपो वर्जयेत्। आकाराणां समुच्छेद, दुर्गाणाञ्च समुच्छेद एवमसत्क्रिया विप्रकीर्णत्वं चैतत्त्रयं अर्थदूषणं प्रोक्तम्। कामं—क्रोधं—मदं—मानं—लोभं दर्पञ्च नृपो दूरतस्त्यजेत्। पूर्वं मृत्यजयं कृत्वा ततः पौरजानपदश्चैवं वाह्यारीनपि जयेत्। गुरवः कुल्यास्तथा कृत्रिमा एते बाह्यारयः सन्ति। पितृपैतामहं रिपोः सामन्तं कृत्रिमञ्चैतत् मित्र त्रयं भवति एतानपि

---

१. धर्ममूलोऽर्थविटपस्तथा कर्मफलो महान्। त्रिवर्गपादपस्तत्र रक्षया फलभाग् भवेत्।
कामाधीनाः स्त्रियो राम! तदर्थं रत्नसंग्रहः। सेव्यास्ता नातिसेव्याश्च भूभुजा विषयैषिणा।।
आहारो मैथुनं निद्रा सेव्या नाति द्विरुग् भवेत्।
एवं कुर्यात् सदा स्त्रीणां रक्षणं पृथिवीपतिः।
न चासां विश्वसेज्जातु पुत्रमातुर्विशेषतः।
न स्वपेत् स्त्रीगृहे रात्रौ विश्वासः कृत्रिमो भवेत्।।
— (अग्निपुराणे २२४ अध्याये, श्लोकें २—४, ४१—४२)

जयेत्। स्वामी—अमात्य—जनपद—दुर्ग—दण्ड: कोषो—मित्रञ्चैतत् सप्ताङ्गं राज्यं भवति। राज्यस्य मूलं स्वामी भवत्यत: स सर्वदा रक्ष्यस्तस्माद् विशेषतो राज्यं रक्षणीयम्। राज्याङ्ग द्रोहिणं हन्यात्। राजा समये—समये तीक्ष्णो मृदुश्च भवेत्। एवं लोकद्वयंजयेत्। भृत्यैर्हासं विवर्जयेत्। एवंभूतं नृपं भृत्या परिभवन्ति। लोकसंग्रहणाय कृतक व्यसनो भवेत्। स्मित—पूर्वाभिभाषी स्यात् लोकानां रञ्जनादेव राजा भवति अतस्तद्रञ्जनञ्चरेत्। दीर्घसूत्रस्य नृपतेरवश्यं कार्यहानि: स्यात्। रागे—दर्पे—माने—द्रोहे—पापे—अप्रिये बक्तव्ये च दीर्घसूत्र: प्रशस्यते। राजा गुप्तमन्त्रो भवेत्, गुप्तमन्त्रत आपत्तयो न भवन्ति। नैको मन्त्रं मन्त्रयेत्, कृतं कर्म ज्ञायते नारब्धम्। बहुभि: सह पृथक्—पृथक् मन्त्रान् मन्त्रयेत्। आकारैरिङ्गितैर्गत्या चेष्ट्या भाषितेन नेत्रवक्त्रविकाराभ्यां अन्तर्गतं ज्ञायते। मन्त्रिणामप्यग्रे मन्त्री मन्त्र प्रकाशनं न कुर्यात्। नृणां क्वापि कस्यापि विश्वासो भवति, अत एकेन सूरिणा मन्त्रे निश्चय: कार्य:।[1]

---

१. राजपुत्रस्य रक्षा न कर्त्तव्या पृथिवीक्षिता। धर्मार्थकामशास्त्राणि धनुर्वेदञ्च शिक्षयेत्।।
शिल्पानि शिक्षयेच्चैवमाप्तैर्मिथ्या प्रियम्बदै:। शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत्।।
न चास्य सङ्गोदातव्य: क्रुद्धलुब्धविमानितै:। अशक्यन्तुगुणाधानं कर्तुं तं बन्धयेत् सुखै:।।
अधिकारेषु सर्वेषु विनीतं विनियोजयेत्। मृगयां पानमक्षांश्च राज्यनाशं त्यजेन्नृप:।।
दिवास्वप्नं वृथाढ्यञ्च वाक्रूण्यं विवर्जयेत्। निन्दाञ्च दण्डपारूपयमर्थदूषण मुत्सृजेत्।।
आकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया। अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्विमेव च।।
अदेशकाले यद्दानमपात्रे दानमेव च। अर्थेषु दूषणं प्रोक्तमसत्कर्म प्रवर्तनम्।।
कामंक्रोधं मदं मानं लोभं दर्पञ्च वर्जयेत्। ततो मृत्युञ्जयं कृत्वा पौर जानपदं जयेत्।।
जयेद् ब्राह्यानरीन् पश्चाद् ब्राह्याश्च त्रिविधारय:। गुरवास्ते यथा पूर्व कूल्यानन्तर कृत्रिमा:।।
पितृपैतामहं मित्रं सामन्तञ्च तथा रिपो:। कृत्रिमञ्च महाभाग! मित्रं त्रिविधमुच्यते।।
स्वाम्यमात्यं जानपदा दुर्गं दण्डस्तथैव च। कोषो मित्रञ्च धर्मज्ञ! सप्ताङ्गं राज्यमुच्यते।।
मूलं स्वामीसवैरक्ष्यस्तस्माद्राज्यं विशेषत:। राज्याङ्गद्रोहिणं हन्यात् काले तीक्ष्णो मृदुर्भवेत्।।
एवं लोकद्वयं राज्ञो भृत्यैर्हासं विवर्जयेत्। भृत्या परिभवन्तीह नृपं हर्षणसत्कथम्।।
लोक संग्रहणार्थायकृतकव्यसनो भवेत्। स्मित्पूर्वाभिभाषी स्यात् लोकानां रञ्जनं चरेत्।।
दीर्घसूत्रस्य नृपते: कर्महानिर्ध्रुवं भवेत्। रागे दर्पे च माने च द्रोहे पापे च कर्मणि।।
अप्रिये चैव वक्तव्ये दीर्घसूत्र: प्रशस्यते। गुप्तमन्त्रो भवेद्राजा नापदोगुप्तमन्त्रत:।।
ज्ञायते हि कृतं कर्म नारब्धं तस्य राज्यकम्। आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।।
नेत्र वक्त्रापिवकाराभ्यां गृह्यतेऽन्तर्गतं पुन:। नैकस्तु मन्त्रयेत् मन्त्रो न राजा बहुभि: सह।।
बहुभिर्मञ्त्रयेत् कामं राजा मन्त्रान् पृथक्—पृथक्। मन्त्रिणामपि नो कुर्यान् मन्त्री मन्त्रप्रकाशनम्।।
क्वापि कस्यापि विश्वासोभवतीह सदानृणाम्। निश्चयश्च तथामन्वोकार्य्य एकेन सूरिणां।।
— (अग्निपुराणे २२५ अध्याये, श्लोक १—२०)

राजा अविनयान्नश्येत् विनयाच्च राज्यं लभेत्। त्रैविद्येभ्यय्यस्त्रयीं विद्यां दण्डनीतिं आन्वीक्षिकीं अर्थविद्याञ्च लभेत् लोकतो वार्तारम्भांश्च। जितेन्द्रियो राजा हि प्रजा वशे स्थापयितुं शक्नोति। सर्वे देवा द्विजाश्च पूज्या भवन्ति, तेषु दानानि दद्यात्। द्विजे दानमक्षयो निधिरुच्यतेऽयं कैश्चिन्न नाश्यते। संग्रामेष्वनिवर्तित्वं प्रजानां पालनम्, ब्राह्मणानां दानानि चैतत् त्रयं राज्ञो परं निःश्रेयसं मन्यते। राजा कृपणानाथवृद्धानां विधवानां योषितां सदा योगक्षेमं वृत्तिञ्च परिकल्पयेत्। वर्णाश्रमव्यवस्थानं तापसानां पूजनञ्च कार्यम्। सर्वत्र तापसेषु न विश्वसेत्। तत्त्वेन हेतुना विश्वासयेत्। वकवदर्थं चिन्तयेत् सिंहवत् पराक्रमेत्। वृकवच्चावलुम्पेत् शशवद् विनिष्पतेत् दृढ़ प्रहारी भवेत् शूकरवत्। शिखिवत् चित्राकारौ अश्ववद् दृढ़भक्तिर्भवेत्। कोकिलवन्मधुरामाषी भवेत्। काकशङ्की तथा नित्यमज्ञात वसतिं वसेत्। अपरीक्षितं भोजनं न कुर्यात् शयनं च न शयीत। अविज्ञातां स्त्रियं अविज्ञातं नावञ्च न गच्छेत्। राष्ट्रकर्षी राज्याज्जीविताच्च भ्रस्यते। भृतो वत्सो जातबलो यथा कर्मयोग्यो भवति तद्वत् भृतं राष्ट्रं कर्मसहो भवेत्। सर्वं कर्म दैवपौरुषे विधाने आयत्तं भवति, तयो दैंवमचिन्त्यं भवति, किन्तु पौरुषे क्रिया भवति। राज्ञो राज्यमहीश्रियो जनानुरागप्रभवा भवन्ति।[1]

---

१. *नश्येदविनयाद्राजा राज्यञ्च विनयाल्लभेत्। त्रैविद्येभ्यस्त्रयीं विधां दण्डनीतिञ्च शाश्वतीम्।।*
*आन्वीक्षिकींचार्थविद्यां वार्तारम्भाँश्चलोकतः। जितेन्द्रियोहि शक्नोतिवशे स्थापयितुं प्रजाः।।*
*पूज्यादेवा द्विजाः सर्वेदद्याद् दानानि तेषु च। द्विजेदानञ्चाक्षयोऽयंनिधिः कैश्चिन्न नाश्यते।।*
*संग्रामेष्वनिवर्तित्वं प्रजानां परिपालनम्। दानानिब्राह्मणाञ्च राज्ञो निःश्रेयसम्परम्।।*
*कृपणानाथ वृद्धानां विधवानाञ्च योषिताम्। योगक्षेमञ्च वृत्तिञ्च तथैव परिकल्पयेत्।।*
*वर्णाश्रमव्यवस्थानं कार्य्यंतापसपूजनम्। न विश्वसेच्च सर्वत्र तापसेषु च विश्वसेत्।।*
*विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना। वकवच्चिन्तयेदर्थं सिंहवच्च पराक्रमेत्।।*
*वृकवच्चावलुपेत् शशवच्चविनिष्पतेत्। दृढ प्रहारी च भवेत् तथा शूकरवन्नृपः।।*
*चित्राकारश्च शिखिवत् दृढभक्तिस्तथाश्ववत्। भवेच्च मधुराभाषी तथा कोकिलवन्नृपः।।*
*काकशङ्की भवेन्नित्यमज्ञातां वसतिं वसेत्। नापरीक्षितपूर्वञ्च भोजनं शयनं स्पृशेत्।।*
*नाविज्ञातां स्त्रियं गच्छेन्नाज्ञातं नावमारूहेत्। राष्ट्रकर्षी भ्रस्यते च राज्यार्थाच्चैव जीवितात्।।*
*भृतो वत्सो जातवलः कर्मयोग्यो यथा भवेत्। तथा राष्ट्रं महाभाग! भृतंकर्मसहं भवेत्।।*
*सर्वं कर्मेदमायत्तं विधाने दैवपौरुषे। तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया।।*
*जनानुराग प्रभवा राज्ञो राज्यमहीश्रियः। — (अग्निपुराणे २२५ अध्याये, श्लो.२१—३३)*

देहान्तरार्जितं कर्म दैवंमित्युत्यते तस्मात् मनीषिणो पौरुषं श्रेष्ठमाहु:। प्रतिकूलं दैवं पौरुषेण विहन्यते। दैवं पुरुषकारश्च पुंसोद्वयं फलावहमस्ति। राज्ञ: सामादिभिरूपायै सर्वेऽप्युपक्रमा: सिद्धयन्ति। चारै राजा जगद् व्याजात्यत: स समीरण: प्रोक्त: दोषनिग्रहकारित्वाद् वैवश्वतोमत:। दुर्बुद्धिं यदा दहति तदा सपावको भवति। यदाद्विजातिभ्योदानं दद्यात् तदा स धनेश्वरो मत:। धनधारावर्षित्वाद्वरुणोमत:। क्षमयां लोकान् धारयन् पार्थिव: पार्थिवो भवेत्। यश्चोत्साह–शक्त्याद्यै प्रजा: रक्षेत्तस्माद्धरि: स्मृत:।[1]

स्वामी–अमात्यं–राष्ट्रं–दुर्गं–कोषो–बलं–सुहृदेतत् सप्ताङ्गं राज्यं परस्परोकारि भवति। राज्याङ्गेषु श्रेष्ठं साधनं राष्ट्रं भवति अत: सदा राष्ट्रं पालयेत्। अविसंवादिता–सत्यं–वृद्धसेवा–कृतज्ञता–दैवसम्पन्नता–श्रेष्ठ बुद्धि:–अक्षुद्रपरिकारिता–शक्यसामन्तता–दृढ्भक्तिता–दीर्घदर्शित्वं–उत्साह:–शुचिता–स्थूल–लक्षिता–विनीतत्व–धार्मिकता – एते सर्वे नृपतेर्गुणा भवन्ति। महीपति: प्रख्यातवंशं–अक्रूरं–लोकसङ्ग्राहिणं–शुचिं–आत्महिताकाक्षि परिचारं कुर्वीत। कुलीना–शुचय:–शूरा:–श्रुतवन्त:–अनुरागिण:–दण्डनीते: प्रयोकारश्च राज्ञ: सचिवा: स्यु:। सुविग्रह:–जानपद:–कुलशील वलान्वित:–स्तम्भचापलहीन:–क्लेशसह:–शुचिश्च

१. *स्वमेव कर्मदैवाख्यं विद्धि देहान्तरार्जितम्। तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिण:।।*
*प्रतिकूलं तथादैवं पौरुषेण विहन्यते। दैवं पुरुषकारश्च द्वयं पुंस: फलावहम्।।*
*सामादिभिरूपायैस्तु सर्वे सिद्धयन्त्युपक्रमा:। जगद् व्याप्नोति वै चारैरतो राजा समीरण:।*
*दोषनिग्रहकारित्वात् राजा वैवश्वत: प्रभु:। यदा दहति दुर्बुद्धिं तदा भवति पावक:।।*
*यदा दानंद्विजातिभ्यो दद्यात् तस्माद् धनेश्वर:। धनधाराप्रवर्षित्वात् देवादौवरुण: स्मृत:।।*
*क्षमया धारयन् लोकान् पार्थिव: पार्थिवो भवेत्। उत्साहमन्त्रशक्त्याद्यै रक्षेत् यस्माद्धरिस्तत:।।*
*– (अग्निपुराणे २२६ अध्याये, श्लो. १, ३, ५, १८, २०)*

मैत्रः करणीयः। सत्त्वसत्यधृतिस्थैर्यप्रभावारोग्यसुसंतः—कृतशिलपः—दक्षः—प्रज्ञावान्—धारणान्वितः—दृढभक्ति वैराणांमकर्ता सचिवो विधेयः। स्मृतिः अर्थेषु तत्परता—चित्तज्ञः—ज्ञाननिश्चयः दृढ़ता—मन्त्रगुप्तिश्चैषा मन्त्रिसम्पत् प्रकीर्तिता। त्रय्यां दण्डनीत्याञ्च कुशलः पुरोहितः कार्य्यः। स्वजनेभ्यश्चक्षुष्मतां शिल्पञ्च परीक्षेत् कुलं स्थानं अवग्रहञ्च विजानीयात्। परिकर्मसु दक्षं विज्ञानं धारयिष्णुताञ्च गुणत्रयं परीक्षयेत्। कथायोगेषु प्रागल्भ्यं प्रीतितां बुध्यते। आपदि वाग्मित्वं सत्यवादितां उत्साहं प्रभावं क्लेशसहिष्णुतां धृतिं अनुरागं स्थैर्य्यञ्च लक्षयेत्। व्यवहारतो भक्तिं मैत्रीं शौचं च जानीयात्। सम्वासिभ्यो बलं—सत्वं—आरोग्यं—शीलं—अस्तव्यतां—अचापल्यं—भद्रतां—क्षुद्रताञ्च जानीयात्। सर्वत्र परोक्षगुणवृत्तयः फलानुमेया भवन्ति। शश्याकारवती—पुण्या—स्वनिद्रव्यसमन्विता, मोहिता—भूरिसलिला—पुण्यैर्जनपदैर्युता—रम्या—सकुञ्जरवला—वारिस्थलपथान्विता—अदेवमातृका एताः सर्वाः भूरिवृत्तये शक्यन्ते।[1]

---

१. *स्वयमामात्यञ्च राष्ट्रञ्च दुर्गकोषो वलं सुहृत्। परस्परोकारीदं सप्ताङ्गं राज्यमुच्यते।।*
*राज्याङ्गानां वरं राष्ट्रं साधनं पालयेत् सदा। कुलं शीलं वया सत्वं दाक्षिण्यं क्षिप्रकारिता।।*
*अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता। दैवसम्पन्नता बुद्धिरक्षुद्रपरिवारिता।।*
*शक्यसामन्वता चैव तथा च दृढ भक्तिता। दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षिता।।*
*विनीतत्वं धार्मिकता साधोश्चनृपतेर्गुणाः। प्रख्यातवंशमक्रूरं लोकसङ्ग्राहिणं शुचिः।।*
*कुर्वीतात्महिताकाङ्क्षि परिवारं महीपतिः। कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः।।*
*दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः। सुविग्रहो जानपदः कुलशीलकलान्वितः।।*
*वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान्। स्तम्भ चापलहीनश्चमैत्रः क्लेशसहःशुचिः।।*
*सत्यसत्त्व वृतिस्थैर्य प्रभावारोग्यसंयुतः। कृतशिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वितः।।*
*दृढभक्तिरकर्ता च वैराणां सचिवो भवेत्। स्मृतिस्तत्परतार्थेषु चित्रज्ञे ज्ञाननिश्चयः।।*
*दृढतामन्त्रगुप्तिश्च मन्त्रिसम्पत् प्रकीर्तिता। त्रय्यां च दण्डनीत्यां च कुशलः स्यात् पुरोहितः।।*
*चक्षुष्मतां च शिल्पं च परीक्षेत गुणद्वयम्। स्वजनेभ्यो विजानीयात् कुलं स्थानमवग्रहम्।।*
*परिकर्मसु दक्षञ्च विज्ञानं धारयिष्णुताम्। गुणत्रयं परीक्षेत प्रागल्भ्यं प्रीतितां तथा।।*
*कथायोगेषु बुध्येत वाग्मित्वं सत्यवादिताम्। उत्साहं च प्रभावं च तथाक्लेशसहिष्णुताम्।।*
*धृतिं चैवाऽनुरागञ्च स्थैर्य्यञ्चापदि लक्षयेत्। भक्तिं मैत्रीं च शौचं च जानीयात् व्यवहारतः।।*
*सम्वासिभ्यो बलं सत्वंमारोग्यं शीलमेव च। अस्तब्धतामचापल्यं वैराणां चाप्यकीर्तनम्।।*
*प्रत्यक्षतो विजानीयात् भद्रतां क्षुद्रतामपि। फलानुमेयाः सर्वत्र परीक्षगुणवृत्तयः।।*
*शस्याकारवती पुण्या खनिद्रव्य समन्विता। मोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता।।*
*रम्या सकुञ्जरनला वारिस्थलपथान्विता। अदेवमातृका चेति शस्यते भूरिवृत्तये।।*
*— (अग्निपुराणे २३९, अध्याये, श्लो. १—६, ११—१६, १८—२५)*

शूद्रकारूवणिक् बहुलो महारम्भः कुशीवलः पशुमान्, वली, नानादेश्यैर्जनैः समाकीर्णः, धार्मिकः, सानुरागो रिपुद्वेषी पीडासहकरो जनपदः कार्यः। राजा पृथुसीमं महाखातं, उच्चप्राकार तोरणम्, शैल–सरिन्मरू वनाश्रयं पुरं समावसेत्। जलबद्धान्यधनवद् औदकं, पार्वतं, वार्क्षं ऐरिणम्, धन्विनञ्च षट्विधं कालसहं महद्दुर्गं कार्य्यम्। ईप्सितद्रव्यसम्पूर्णः पितृपैतामहोचितः धर्मार्जितः व्ययसहः धर्मादिवृद्धये कोषः स्थापनीयः। पितृपैतामहो वश्यः, संहतः, दत्तवेतनः, विख्यात पौरुषः, जन्यः, शकुनैर्वृतः कुशलः प्रवासायासदुःखेषु जन्येषु च कृतश्रमः नानाप्रहरणसंयुतः विविधयुद्धविशारदः, विविधयोधसमाकीर्णः नीराजितहयद्विपः अद्वैधक्षत्रियप्रायो दण्डवतां दण्डो मतः। योगविज्ञानसत्त्वाद्यं महत्पक्षं प्रियम्वदम् आयतिक्षमम् सत्कुलं अद्वैधं मित्रं कुर्वीत। दूरादेवाभिगमनं स्पष्टार्थं हृदयानुगा सत्कृत्यवाक्प्रदानं च त्रिविधः मित्रसंग्रहः कार्यः। औरसं सन्नद्धं वंशक्रमागतं व्यसनेभ्यो रक्षिञ्च चतुर्विधं मित्रं करणीयम्। राजा सर्वसत्त्वानांपर्जन्यवदाजीव्यो भवेत्। आयद्वारेषु धनं आददीत्। सर्वकर्मसु उद्योगसम्पन्ना–नध्यक्षान् कुर्यात्। साधुचरितो राजा कृषिर्वणिग्यथो दुर्गं सेतुः कुञ्चरवन्धनम् खन्याकरवलादानं शून्यानां निवेशनमिष्टवर्गं सदानुपालयेत्। आमुक्तेभ्यश्चरेम्यः पौरेभ्यो राजवल्लभात् पृथिवीपतिलोभाच्च पञ्चधाभयं प्रजानां भवति। एतद् भयमवेक्ष्यनृपः काले करं आददीत्। स्वशरीरं राष्ट्रञ्च आभ्यन्तरं वाह्यञ्च संरक्षेत्। राजा दण्डवान् दण्डयेत् विषादितः स्वं संरक्षेत्। स्त्रियः पुत्रांश्च रक्षेत्। शत्रुभ्यो कदाचन न विश्वसेत्।[1]

१. शूद्रकारुवणिक् प्रायो महारम्भः कृषीवलः। सानुरागी रिपुद्वेषी पीडासहवरः पृथुः।।
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् वली। ईदृग्जनपदः शस्तःऽमूर्खव्यसनायत्तः।।
पृथुसीमं महाखातमुच्चप्राकारतोरणम्। पुरं समाचसेच्छैल सरिन्मरुवनाश्रयम्।।
जलबद्धान्यघनवद् दुर्गं कालसहं महत्। औदकं पार्वतं वार्थमैरणं धन्विनं च षट्।।
ईप्सित द्रव्यसम्पूर्णः पितृपैतामहोचितः। धर्मार्जितां व्ययसहः कोषो धर्मादि वृद्धये।।
पितृपैतामहोवश्यः संहतो दत्तवेतनः। विख्यातपौरुषो जनाः कुशलः शकुतैर्वृतः।।
नानाप्रहणोपेतो नानायुद्धविशारदः। नानायोधसमाकीर्णो नीराजित हयद्विपः।।
प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः। अद्वैधक्षत्रियप्रायो दण्डो दण्डवतां मतः।।
योगविज्ञान सत्त्वाद्यं महापक्षं प्रियम्वदम्। आयतिक्षममद्वैधं मित्रं कुर्वीत सत्कुलम्।।
दूरादेवाधिगमनं स्पष्टार्थहृदयानुगा। वाक्सत्कृत्य प्रदानञ्च त्रिविधो मित्रसंग्रहः।।
धर्मकामार्थसंयोगो मित्रात् तु त्रिविधं फलम्। औरसं तत्र सन्नद्धं तथा वंशक्रमागतम्।।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्।
आजीव्यः सर्वसत्त्वानां राजा पर्जन्यवद् भवेत्। आयद्वारेषु चात्यर्थधनं चाददतीति च।।
कुर्यादुद्योगसम्पन्नानध्यक्षान् सर्वकर्मसु। कृषिर्वणिग्पथो दुर्गं सेतुः कुञ्जर बन्धनम्।।
खन्याकरबानादावलानं शून्यानां च निवेशनम्। अष्टवर्गमिमं राजा साधुवृत्तोऽनुपालयेत्।।
आमुक्तिकेभ्यश्चौरेभ्यः पौरेभ्यो राजवल्लभात्।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधाभयम्।।
अवेक्ष्यैतद्भयं काले आददीत करं नृपः।
अभ्यन्तरं शरीरञ्च स्वं वाह्यं राष्ट्रञ्च रक्षयेत्।।
दण्डयाँस्तान् दण्डयेद्राजा स्वं रक्षेच्च विषादितः।
स्त्रियः पुत्राँश्च शत्रुभ्यो विश्वसेन्न कदाचन।।
—(अग्निपुराणे २३९ अध्याये, श्लोक २६—३७, ४३—४८)

## (3) प्रजाधर्मः

पश्चिमी सभ्यता आस्तिक्यहीन भौतिकविज्ञान (Golless material Science) मूलकत्वात् अस्या यावती वृद्धिर्भवति। मनुष्यहृदयात् ईश्वरभक्ति–देवतासुभक्ति–सूक्ष्मजगदुपरि विश्वासस्तथा स्थूलजगदेव यत्किमपि सर्वमस्तीति ज्ञानस्य बुद्धि तावत्येव नष्टा जायते, यत्फलमिदमस्तीति यदीश्वरस्य देवतानाञ्च विभूतिभ्यः प्रजानां श्रद्धाभक्ती नष्टप्राये जाते। स्वधर्मसेवके यथार्थराज्ञि ईश्वरस्य देवतानाञ्च विभूतितयो वसन्ति –

'अष्टानां लोकपालनां मात्राभिर्निर्मितो नृपः।।'

अयमार्यशास्त्रस्य विद्यते सिद्धान्तः। अतएव राजभक्तिरीश्वरमूलिका अस्ति। ईश्वरभक्तिर्यावती अनङ्क्ष्यत् राजभक्तिरपि तावत्यनङ्क्ष्यत्। अतो ईश्वरभक्तिहीनभौतिक–विज्ञानप्रभावात् संसारतो राजाभक्ति रवश्यं नश्यति तथा राजतन्त्रस्यस्थाने प्रजातन्त्रः प्रभविष्यति निश्चयमेव। पश्चिमी सभ्यता आस्तिक्यहीनाभौतिकविज्ञानमूलिका वर्ततेऽतः पश्चिमी सभ्यतैव राज्यतन्त्रं विनाश्य प्रजातन्त्रराजसंस्थापनस्य मूलं कारणमस्ति।

पश्चिमी सभ्यताऽर्थकामोपरि प्रतिष्ठिताऽस्ति। अत्र कर्ममोक्षयोर्नाममात्रलेशो नास्ति। धर्महीनावर्थकामौ केन प्रकारेण वासनां वर्द्धयित्वा मनुष्यमुन्मत्तं कुरुत इति नाविदितमस्ति विदुषाम्। अस्मात्करणादेवनिश्चितमस्ति यत् यस्यां जातौ धर्महीनयोरर्थकामयोर्वृद्धिर्भविष्यति तत्र वासनाया अन्तो न भविष्यति, मनुष्याः प्रतिदिनं वासनां वर्द्धयन्तो चक्रवर्तीपदमप्याप्तुं तत्परा भविष्यन्ति। यस्य फलं भविष्यति यत् राज्ञो राज्यसम्पत्तिमवलोक्यर्ष्योद्वेषाभ्यां

मृतप्रायाः भविष्यन्ति तथा राजानं श्रेष्ठममत्वा स्वयं आत्मनि नृपं कर्तुं वाञ्छिष्यन्ति अस्यायमपि परिणामो भविष्यति यत् असावधानत्वात् प्रजासु निरङ्कुश स्वाधीनताप्रवृत्तिर्बलवती भविष्यति। अतो दृष्टं यत् धर्ममोक्षहीनाया पश्चिमीसभ्यतायाः परिणामतः राजतन्त्रस्य प्रधानता विनश्य प्रजातन्त्रप्रथा अवश्यमेव प्रतिष्ठिता भविष्यतीति।

नृपेषु राजशक्तेरपलापात्तपो नश्यति। जगन्नियन्तुर्भवतो नियमैव वर्तते यत् — संसारेऽस्मिन् किमपि पदार्थोऽनावश्यको न तिष्ठति। प्रकृतिमाता अनावश्यकं वस्तु शीघ्रमेव प्रलयगर्भे निलीयते। एतन्नियमानुसारं मनुष्येष्वपि यदि भगवत्प्राप्त कस्यचन वस्तुनो नोपयोगो भवेत् दुरुपयोगो भवेत्तदा तद्वस्तु ग्रहीतुः पार्श्वे बहुदिनं यावन्न स्थास्यति अथवाऽग्रिमजन्मनि तेन वस्तुना शून्यो भूत्वा स उत्पत्स्यति। दृष्टान्तरुपेणावगन्तुं शक्यते यत् अस्मिन्जन्मनि धनं प्राप्य तदुपयोगं न कारिष्यति वा पापकार्ये तद्दुरूपयोगं करिष्यति स तीव्रपापेनास्मिन् जन्मनि साधारणतोऽग्रिमजन्मनि निर्धनतामवश्यमेवलप्स्यते नात्रकस्चन सन्देहः। चक्षुरुपलभ्य तद्दुरुपयोगकर्त्ता नेत्रहीनोभूत्वोपत्स्यते। वुर्द्धिप्राप्य तद्दुरुपयोगकर्त्ता दुर्बुद्धि—र्भूत्वोत्पत्स्यते। एतत् सर्वं कृत्यं प्रतिक्रियामयः प्राकृतिको नियमो वर्तते। पूर्वजन्मनः सन्नामतपस्यापरिणामेन मनुष्यो राज्यमाप्नोति, तपस्याप्रभावेणापूर्वस्योत्पन्नत्वात् राज्ञः शरीरे सूर्य—चन्द्र—वरुण—यमादीनां अष्टदेवानां विभूतयः प्रादुर्भवन्ति। किन्तु यदि राजा आसां दैवीविभूतीनामुपयोगमविधाय दुरुपयोगं कुर्यात् — यथा, सूर्यांशमाप्य प्रकाशमविस्तार्य अन्धकारं विस्तारयेत् तथा कूटराजनीतिकौशलेन प्रजानामर्थकालौ विनाश्य प्रजाजीवनं चिरकालं यावद् दारिद्र्यमयं दुःखमयञ्च विदधीत तथाऽनेन प्रकारेण विद्यादानेन सह कूटराजनीतेः सम्बन्धं मेलयित्वा राजशक्तेरपलापात् तपःक्षयं पापाचरणं चरेत्। चन्द्रांशं च प्राप्यापि

निजगुणेनाऽऽनन्दमदत्वा निजस्वार्थसिद्धयर्थं दुःखमेव दद्यात्, वरुणांशं प्राप्यापि धनेन प्रजा अपुष्टयित्वा दुर्भिक्षस्य विकरालमुखे पातयेत् तथा प्रजाशोषणेन करग्रहणेन नैजैश्वर्यसुख—गौरवादीनामेव वृद्धिं कुर्यात् अथवा राज्येव्ययाधिक्यनीतिं चालयित्वा राज्यं दुर्बलं प्रजाश्च दारिद्र्यदुःखेन पीडिता कुर्यात्। प्राप्यापि न्यायाऽनुसारं विचारमविधायान्यायपक्षपाताभ्यां स्वविचारं प्रदर्शयेत् तथाविचारविभागेऽपि कूटराजनीतिं कार्ये आनीयात्यन्त पापाचारी भवेत् तदाऽनेनव्यवहारेण देवांशानां दुरुपयोगत्वात् राज्ये दैवीविभूतयो नङ्क्ष्यन्ति तथा तत्र राक्षशांशाः प्रकटीभूय भीषणप्रजापीडनस्य कारणानि भविष्यन्ति यिथा शुक्रेण प्रतिपादितम् —

धर्माऽनुसारं प्रजापालके नृपे देवांशाः प्रादुर्भवन्ति अन्यथा राक्षशांशाः प्रकटीभूय राजानं प्रजापीडकं कुर्वन्ति।[1] पुनरेवमेव प्रजापीडन पापात् राज्ञो दुर्गतिर्भवतीति व्यनक्ति महर्षिर्याज्ञवल्क्यः —

प्रजापीडनसन्तापजन्याग्निर्राज्यं कुलं श्रियं प्राणांश्च सन्दह्य न विनिवर्तते।[2] इतिहास—पर्यालोचनेनैतदेव विज्ञायते। नहुष इन्द्रो भूत्वापि प्रजापीडन पापादेव च्युतो जातः। वेन—दुर्योधन कंसादीनामपि पतनमेव जातम्। साम्प्रतिके युगेऽपि समस्त जगति राजसु देवांशानामभाव एवाऽवलोक्यते। विपरीतत आसुरराक्षसादीनां विभूतिप्राबल्यात् प्रजा पीडनात्तज्जन्यपापाच्च राज्ञां तपः क्षयो जायते। यावत् पूर्वजन्मनस्तपस्या अवशिष्टा तावदेव तद्राज्यं चलिष्यति ततः सम्पूर्ण तपस्यानाशात् सर्वमेव नङ्क्ष्यति तथा संसारे राजतन्त्र स्थाने प्रजातन्त्र राज्यं भविष्यति। एतदेव वर्तमानसमये राजनैतिक जगतोऽष्टचक्रस्य परिवर्तनं दृग्गोचरी भवति।

---

१. *यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसाम्।*
*अंशभूतो धर्मलोपी प्रजापीडाकरो भवेत्।।* —*शुक्रनीतिः।*

२. *प्रजापीडनसन्तापात् समुद्भूतो हुताशनः।*
*राज्यं कुलं श्रियं प्राणानऽदग्ध्वा विनिवर्तते।।* —*याज्ञवल्क्य स्मृतिः।*

एकतः प्रजासु धैर्य्य – त्याग–सहनशीलतादिभिस्तपः सञ्चयो लाभश्च, अपरतो राजानो पापाचरण–प्रजापीडन–दुर्व्यसनादिभिः पूर्वतपस्यां परित्यज्य शक्तिहीना जायन्ते, एकतश्च प्रजा त्यागिनं धार्मिकं राजानमभिसृत्य धैर्य्येण सहास्थायी राज्ञामत्याचारं सहित्वा धैर्य्य–त्याग–सहिष्णुतादि सद्गुणैः सह तपःसञ्चयं दैवीकृपालाभं च कुर्वन्ति। अस्य परिणामः किं भविष्यतीत्यनायासेनैव ज्ञातुं शक्यते। राजगणतो भगवत्कृपा दूरं गमिष्यति तथा प्रजानामुपरि भगवत्कृपादृष्टेर्वृष्टिर्भविष्यति। जगति सहनशीलता–त्याग, आत्मवलिदानादिभिरेव शक्तिर्लभ्यते। यदि वसुदेवदेवक्यौ कंसस्यात्याचारं नासहिष्यातां तर्हि भगवान् श्रीकृष्णस्तत्पुत्रो भूत्वा संसारे स्वतःप्रकटय्य तद्दुःखविनाशं कंसविनाशं नाकरिष्यत्। द्रौपद्या वस्त्राहरणसमये पाण्डवा धैर्य्यं धर्मञ्च नाधरिष्यन् तदा श्रीकृष्णस्य कृपां कुरुक्षेत्रयुद्धे विजयश्रियं नालभविष्यन्। महात्मा ईसामसी यहूदीनां मरणान्तमत्याचारं नासहिष्यत् तदा ईसाई धर्मस्य समस्ते संसारे एतावान् विस्तारो नाभविष्यत्। अतः सहिष्णुतया तपोलाभस्तेन दैवकृपाभगवत्कृपालाभश्चान्ते तपस्याफलेन राज्यलाभोऽपि विधातुरवश्यम्भाविविधानमस्ति। अनेनैव विशेषकारणत्रयेण राजनैतिक जगच्चक्रस्यगतिः कलियुगस्यास्मिन्नंशे प्रजातन्त्रमभिचलति, अयमेव विचारो–ऽनुभवसिद्धोऽतीवसत्यञ्च प्रतीयते।

यथा प्रजातन्त्रस्य गतिः साम्प्रतं समस्तसंसारे भवन्नस्ति। यद्यपि प्राचीन हिन्दुराज्यकाले एतादृशी प्रजातन्त्र प्रथा नासीत् तथापि राज्यशासने प्रजामतस्य बहुमतस्यातीवसम्मानमासीत् तथा प्रकारान्तरेण प्रजातन्त्रमेवासीत्। अस्योदाहरणार्थं बहुदूरमन्वेषणस्याऽऽवश्यकता नास्ति। आदर्श क्षत्रिय नरपति श्रीरामचन्द्रस्य राज्यतन्त्रोपरि विचारकरणेनैव सिद्धान्तस्य निर्णयो भविष्यति। श्रीरामचन्द्रस्य राज्याभिषेकसमये राजा दशरथः प्रजानां भिन्न–भिन्न प्रपञ्चेभ्यो

सम्मतिं नीत्वा गुरुवशिष्ठेन राज्याभिषेक कार्यमकारयत्। इत्थं रामायणे लिखितमस्ति। श्रीरामचन्द्रः स्वराज्यकाले प्रजामतं कियत् मन्यते स्म तद्वारामायणस्य पत्रे—पत्रे लिखितमस्ति। एतत् तत्प्रजामतस्य स्वीकरणस्यैव निदर्शनमासीत् यत् — बहुवारं परीक्षयासंसारसम्मुखेऽतीव निर्दोषायां प्रमाणितायामपि परमसतीसीताया केवलं प्रजासन्तोषार्थमेव तेन तस्या वनवासं दत्तम्। प्रजामत—मनस्यैतादृशं दृष्टान्तं जगत इतिहासेऽतीव दुर्लभमस्ति। प्राचीनार्यमतानुसारं क्षत्रिया एव नरपतयो भवितुं शक्यन्ते स्म, अन्यवर्णा राजानो भवितुं न शक्यन्ते स्म। अस्य तात्पर्यमिदमस्ति यत् सत्त्वगुणे क्रियाशक्तेरभावात् सत्वगुणप्रधाना ब्राह्मणा राजानो भवितुं न शक्यन्ते स्म। तमोगुणे प्रमादाधिक्यात् तमोगुणप्रधाना शूद्रा अपि राजानो भवितुं न शक्यन्ते स्म। वैश्यवर्णे क्रियाशक्तिमूलके रजोगुणे विद्यमाने सत्यपि तत्प्रवृत्तिर्रजोगुणमभिवर्तते अस्मादेव कारणात् वैश्या अपि राजानो भवितुं न शक्यन्ते स्म। केवलं सत्वगुणं प्रत्यूत्सुका रजोगुणयुक्ताक्षत्रिया एवार्यशास्त्रानुसारं राजानो भवितुमर्हन्ति स्म। तत्रं रजोगुणत्वात् क्रियाशक्तेर्युद्ध शक्त्यादेः प्राचुर्यं भविष्यति सत्वगुणत्वात् धर्मभावस्याधिक्येन धर्मानुसारं प्रजापालनं राजकार्य सञ्चालनञ्च भविष्यति। अनेनैव प्रकारेण राजतन्त्रप्रणाली—सञ्चालनस्य भारः प्राचीनकाले क्षत्रियोपर्यासीत्।

किन्तु यत् किमपि तन्त्रं स्वतन्त्रं निरङ्कुशं वा नासीत्। द्वयमपि तन्त्रं धर्मतन्त्रेण नियमितं आसीत्। येन राज्यतन्त्रस्य स्वच्छन्द चारिताया तथा प्रजातन्त्रस्य निरङ्कुशताया सम्भावना नासीत्। तथा तद्धर्मतन्त्रव्यवस्थाया उत्तरदायित्वं सर्वश्रेष्ठ—त्यागी—ज्ञानी—दूरदर्शी महर्षिणामुपर्यासीत्। निर्लोभी अरण्यवासी—तपस्वी महर्षिगणः समस्तप्रजाया प्रतिनिधिर्भूत्वा ज्ञानदृष्ट्या धर्मशास्त्रसिद्धान्ताऽनुसारं राज्यशासनस्य प्रक्रियां क्षत्रियनृपतये र्निर्दिशति स्म।

तथा अनेनैव प्रकारेण धर्मतन्त्राधीनीभूय नरपतिः प्रजामतानुसारं राज्यशासनं करोति स्म। यत्र कदाचित् केनचिद्राज्ञा धर्मतन्त्रस्याऽवमाननाऽवहेलना वा क्रियते स्म, तदा प्रजामतस्य प्रतिनिधिर्महर्षिगणस्तस्मिन् समये निरङ्कुशं राजानमवबोधयति स्म। अवबोधनेऽपि धर्मतन्त्रस्य पूर्ण नाशस्याऽऽशङ्कां निरीक्ष्यान्यायि—अधार्मिक राजानं राज्यसिंहासनादुत्तार्य योग्यं धार्मिकं क्षत्रियं वीरं सिंहासनोपरि अभिषिक्तं करोति स्म। इयमेव प्राचीनप्रथाऽनुसारं धर्मतन्त्रद्वारा राजतन्त्रप्रजातन्त्रयोः सामञ्जस्य तथा क्षत्रियनरपतेर्धर्मानुकूल राज्यशासनस्य व्यवस्था वर्तते। एतदस्माभि पूर्वमेवाभिहितं यत् राजतन्त्रप्रथायां प्रचलितायामपि वस्तुत इयमेका प्रजातन्त्र प्रथैवासीत्, यस्य निम्नलिखित लक्षणोपरि विचारः प्रस्तूयते —

(क) तस्मिन् समये ग्रामे—ग्रामे, नगरे—नगरे स्वतन्त्रं—स्वतन्त्रं पञ्चायतनं आसीत्, यस्य प्रमाणं मध्ययुगीनेतिहासाद् बहुशः प्राप्तुं शक्यते।

(ख) धर्मपरिषदः व्यवस्थाया दृढाज्ञा स्मृतिशास्त्रेषु वर्तते, यस्या अनुसारं तद् राजकीयसभाया सभासदः प्रजारूपेण चयनिता भवन्ति स्म।

(ग) राजधर्मप्रणाल्या प्रजाशासनप्रणाल्याश्च निर्णये राजगणो निरङ्कुशो भवितुमेव नार्हति स्म, यतोहि अरण्यवासि—ज्ञानी—तपस्वी—ब्राह्मणैरेवैतेनियमा कृता आसन्। यैः पञ्चायतस्य कापि सम्भावना नासीत्, यथा साम्प्रतं बहुमतै राजसभासु भवति। ब्राह्मणानां निस्वार्थव्रतधारित्वात् तपोधनत्वात् तेषु अन्तर्दृष्टराधिक्याच्च तेषां सिद्धान्ता निर्दोषा सर्वजीवहितकारिणस्तथा दूरदर्शिता पूर्णा आसन्। अतस्तस्मिन् समये नवीन प्रजातन्त्रप्रणाल्या

अभावेऽपि वस्तुतः सा प्रजातन्त्रप्रणाली एवासीत्, केवलं तत्र विलक्षणतेयमासीत् यत् तस्यां प्रणाल्यां राजा प्रजा च एतद्द्वये नैरङ्कुशाऽऽभाव आसीत्। प्रजा राज्ञः सन्ततिर्मन्यते स्म। राजा आत्मानं भगवत्कृपया राज्यसम्पत्तिरक्षकमाश्रयदाता च मन्यते स्म।

कालप्रभावात् साम्प्रतं इत्थं सर्वहितकाराजप्रणालीनष्टप्राया जाता। नैतादृशः धर्मपरायणा क्षत्रियवीरा समुत्पद्यन्ते न चैतादृशी धर्मतन्त्रस्य सम्भावनैवास्ति। साम्प्रतं सर्वत्रार्थकामयोदोर्दण्डप्रतापः, स्वार्थपरता, प्रजापीडनं, प्रजाधनरत्नलुण्ठनं–अविचार–अनाचारादीनां प्राबल्यमेव यत्र–तत्र सर्वत्र दरीदृश्यते। आर्यजातिः स्वधर्मद्वेषवह्निना दग्धीभूय यदाभारतसाम्राज्य सत्ता स्वहस्तात् विनाशिता तदा भगवताऽर्यजाति स्वधर्मप्रेम शिक्षायां साहाय्य प्रदानार्थं स्वधर्मप्रेमि मुसलमानजात्युपरि भारतसाम्राज्यस्य शासनभारं समर्पितः। किन्तु कियद्वर्षं यावद् राज्यकरणानन्तरं औरङ्गजेबप्रमुखैर्यवननरपतिभिरार्यजातेः स्वधर्मप्रेम अकृत्वा यदाऽर्यधर्मस्य मूले कुठाराघातः कृतस्तदा भगवदिच्छाविरुद्धत्वात् भारतवर्षतो मुस्लिमराज्यस्य नाश एव जातः। तदनन्तरं आर्यजातौ स्वजातिविद्वेषवह्निं प्रबलं निरीक्ष्य भगवता पुनरार्यजातिं स्वजाति प्रेमशिक्षायां साहाय्यं प्रदातुं स्वजातिप्रेमि आङ्गलजात्युपरि भारतस्य साम्राज्यभारः समर्पितः। किन्तु दौर्भाग्यादेव भारतवासिना स्वजातिप्रेम शिक्षा न लब्धा, प्रत्युत् हिन्दुजातौ भ्रातृविद्वेष–अनैक्य–स्वजातिविद्वेषानां वीजवपन्मेव प्रारब्धम्। अतो भगवता येनोद्देश्येन आङ्गलाऽत्र प्रेषिता तदुद्देश्यं पूर्णं न जातम्।

इत उपरि कथितकारणत्रयेण धर्मतन्त्रस्य नाशः तपस्यानाशस्तथा प्रजासु प्रतिदिनं तपोवृद्धिर्जायते। अतः कालचक्रस्य गत्युपरि अनुसन्धानं कृत्वा अवलोकनेनायमेवानुभवे–

समायाति यत् साम्प्रतं कलियुगस्य आगामि कियद्वर्षं यावत् प्रजातन्त्रस्यैव प्राबल्यं स्थास्यति तथाऽनेन प्रकारेण नानाजातीनां राज्यस्य चोत्थान पतनादिकं सम्भवत् कलियुगस्यान्तकाले तदेव भविष्यति यथा भगवता वेदव्यासेन श्रीमद्भागवतस्य द्वादशस्कन्धेऽभिहितम्।

सूर्यवंशीयो राजा मरुतस्तथा शन्तनोर्भ्राता चन्द्रवंशीयो देवापि एतौ द्वौ महायोग–वलान्वितौ कलापग्रामे निवसन्तौ तपः कुर्वन्तौ आसते। कलियुगस्यान्ते भगवान् कल्किरूपेण ब्राह्मणवंशे समुत्तीर्य म्लेच्छान् विनाश्य धर्मतन्त्रस्य व्यवस्थां करिष्यति तदा देवापिर्मरूश्च श्रीकल्किभगवत आज्ञानुसारं भारतवर्षस्य शासनभारं स्वहस्ते ग्रहीण्यतः तस्मादेव कालात् पुनर्वर्णाश्रमानुकूल–धर्मानुकूल राजतन्त्रस्य प्रतिष्ठा भविष्यति, अतो हिन्दुजातिना वर्तमान राजनैतिक जगच्चक्रस्य गत्यनुसारं आत्मरक्षा तथा चतुष्पादपूर्ण स्वराज्यलाभार्थं पुरुषार्थः करणीयस्तथा श्रीवेदव्यासोक्त भावि शुभसमयस्य शुभोदयाऽऽकाङ्क्षया आर्यशास्त्रसम्मत पवित्रवर्णाश्रमधर्मस्य वीजरक्षापि करणीया। अयमेव दूरदर्शि महर्षिगणस्याकाट्य सिद्धान्तो विद्यते।[१]

१. *इत्थं कलौ गतप्राये जने तु खरधर्मिणि।*
*धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति।।*
*चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः।*
*धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये।।*
*शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः।*
*भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति।।*
*अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः।*
*असिना साधुदमनमष्टैश्वर्यगुणान्वितः।।*
*विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः।*
*नृपलिङ्गच्छदो दस्यून कोटिशो निहनिष्यति।।*
*अथ तेषां भविष्यन्ति मनांसि विशदानि वै।*
*वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम्।।*
*पौरवजनपदानां वै हतेष्वखिलदस्युषु।।*
*तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति।*
*वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते।।*
*यदावत्तीर्णो भगवान् कल्किर्धर्मपतिर्हरिः।*
*कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी।।* —श्लो. १७–२४
*देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः।*
*कलापग्राम आसांते महायोगवलान्वितौ।।*
*ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ।*
*वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः।।* —श्लो. ३५–३९

## (४) नारीधर्मः

सम्प्रति नारीधर्मविज्ञानं विस्तरसो ब्रूतेः –

"नारीधर्मः पारतन्त्र्यप्रधानः[१]"

नारीधर्मविज्ञानं विवेक्तुकामो महर्षिः सूत्रयति – नार्य्या धर्मः पारतन्त्र्यं पराधीनत्वं प्रधानं मनस परायत्त इत्यर्थः।

वर्णधर्मशुद्ध्यैवाश्रमधर्मसंस्थितिः, नारीधर्मशुद्ध्या च वर्णधर्मशुद्धिरिति नारीधर्मशुद्धिरेव प्रधानं निदानं वर्णाश्रमधर्मे।

सत्सु पुरुषेषु पावित्र्यपरेष्वपि क्षणमात्रमपि काऽपि यदि आर्यमहिला स्वपावित्र्यं विहाय परपुरुषाश्रयणी भवेत् तदा वर्णाश्रमधर्मस्तु भ्रष्टः स्यादेव। तेनैव सह तस्यास्तत् कुलं सा जातिरपि नष्टभ्रष्टे भूत्वा नित्यपितॄणामनुकम्पातोऽपि विरहिते स्याताम्। यतो हि नित्य पितरः साङ्करीः प्रजाः नानुगृह्णन्ति। नारीजातेः पावित्र्याश्रय एव केवलं वर्णाश्रमधर्मोऽवलम्वते स्वस्वरूपमपि तस्याः पावित्र्यरक्षणार्थमेव पारतन्त्र्यपरत्वं तद्धर्मस्य महर्षिभिः प्रतिष्ठापितम्।

कौमार्यावस्थायां तासां मातापितृवश्यत्वन्तूक्तमेव। स्वपरिणयार्थमपि ताः पितृमात्र–धीना एव तिष्ठन्ति। यतो हि वालिकानां परिणयो दानधर्मत्वेनार्य्यशास्त्रेषु गीयते। दानपात्रान्वेषणं तस्यै देयत्वेन तस्याः समर्पणमपि प्रधानं कर्मेति स्वपरिणये नारीणां पितृपारवश्येन पारतन्त्र्यं शास्त्रसिद्धम्।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १११।

यौवने च पत्युर्वशे संस्थितिस्तासां निगदितैव। सतीनां नारीणां कर्मणा वचसा मनसा स्वयर्तृपारतन्त्र्यमभिहितमेव। यदि च दुर्भाग्यतो वैधव्यदु:खेनाभिभूता: स्युस्तदापि समाजाधीनत्वसम्बन्धेन स्वकुटुम्बपारतन्त्र्यं सिद्ध्यत्येवत्यतो नारीधर्मस्य पारतन्त्र्यमूलकत्वं सर्वथाऽपि न विनश्यतीति स्मृतिष्वप्युपलभ्यते।

वालया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्यं गृहेष्वपि।।
वाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
सूत्राणां भर्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम्।।

तन्नि दानमाह: –

"प्रकृतिजन्यत्वात्[१]"

सर्गविज्ञानपारिशीलनत इदमेव सिद्ध्यति यदादि पुरुषात् परमात्मनस्तच्छक्तिरुपायाश्च मूलप्रकृते: सम्बन्धत: प्रवहन्तीयं सृष्टिप्रवाहधारा। स्वनिदानभूतयोस्तयोरेव प्रकृतिपुरुषयोरनुरुपं स्त्रीधारा पुरुषधारा चेति धाराद्वैविध्यमाश्रयति। उक्तमेतत् प्रागेव – "कार्य गुणान् कारणगुणा आरभन्ते" इत्येव नैयायिकानां प्रवाद एतद्विज्ञानमूलक एव। सांख्यदर्शने च कथं प्रकृते: पराधीनत्वं कथञ्च पुरुषादृते तस्या: सत्ताया: एवाऽभाव:। कथं पुरुषार्थ एव तस्या: सर्वोऽपि व्यापार इति साधु निर्णीतम्।

नानाविधैरुपायै रुपकारिण्यनुपाकारिण: पुंस:।
गुणवत्यगुणस्य सतस्तत् कार्यपार्थकञ्चरति।।[२]

---

१. *कर्ममीमांसादर्शने धर्मपादे सूत्रम् ११२।*

२. *सांख्यकारिका।*

अतो ये स्वभावा: मूलप्रकृतौ विद्यन्ते त एव पूर्णविकासवल्यां नाधर्ममपि स्युरिति विज्ञानसिद्धम्। यद्यप्युभिज्जादिस्त्रीधारायां प्रकृतेस्ते भावा न पूर्णतयोपलभ्यन्ते तथापि पूर्णावयवसम्पन्नायां मनुष्यत्वयोनौ पूर्णावयवीयाया नारी जाते: स्वभाव: पुरुषपारतन्त्र्यरूप: पूर्णतया विकसित: स्यादिति स्वभावसिद्धम्।

विवाहसम्बनधेनापीदं विज्ञानं द्रढयति: —

"तस्माद्दानप्रधानो विवाह:[१]"

यद्यपि विवाहस्य वह्वो भेदा मानवजातौ शास्त्रादिषु चोपलभ्यन्ते तथापि कन्यादान प्रधान एव विवाहो धर्म्यो वहुसम्मतश्च। नारीजाते: पारतन्त्र्यप्रधानत्वात् स्वयम्वरणादिप्रथा न साधीयसी, नापि सा प्रथा तत्स्वभावाऽनुकूला किन्तु कुमार्य्या: कन्यादानपद्धत्यनुरूप: कन्यादानप्रधान एव परिणय उत्तम:। यतो हि तस्यामवस्थायां कन्या पितुर्वशवर्तिनी पराधीनसर्वकृत्याऽतस्तदनुरूपमुत्तमं योग्यं वरमन्विष्य तेन तस्या: कन्यादानविधिना पाणिग्रहणं सर्वोत्तम: संस्कार इति सर्वत्रैव श्रुतिस्मृतिषूपलभ्यते: —

आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्।
आहूयदानं कन्याया ब्राह्मो धर्म: प्रकीर्तित:।।
दश पूर्वान् परान् वंश्यानात्मानं चैकविंशतिम्।
ब्राह्मीपुत्र: सुकृत्कृन्मोचयेदेनस: पितॄन्।।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११३।

प्रसङ्गः सङ्गतं सर्वानर्थमूलं विधवोद्वाहं निन्दतिः —

"विधवोद्वाहो व्योमकुसवदतः[१]"

अतो विवाहस्यदानमूलकत्वादत्र च दातुरभावाद् विधवाया उद्वाहो व्योम्न आकाशस्य कुसुमवत् पुष्पवद् असम्भव इति यावत्। प्रथम आर्य्यजातौ विवाहपद्धतेः कन्यादानमूलकत्वात् मातापित्रोर्दत्तायाः कन्यायाः पुनर्दानेऽधिकार एव नास्ति। अन्योऽपि दाता न सम्भवति अधिकाराभावादेव। भूतस्य पत्युरेव तत्राधिकारात् तस्य चाभावात् अन्यस्य च तत्राऽ—धिकारात् विधवाया उद्वाह आकाशकुसुमवदसम्भव एवेति पूर्वमूलस्य दानलक्षणस्य मर्माभिजानतां विदुषान्न तिरोहितम्।

अपरतश्च नारीजातेः प्रकृतिधर्मशालिनीत्वात्, पराधीनधर्मायास्तस्याः पत्यन्तरग्रहणान्न तत् स्वभाव सिद्धम्, प्रत्युत् सर्वथा विपरीतमेव।

अन्यतश्च नार्य्याः सतीत्वमेव प्रधानं धर्मस्ततश्च पत्यन्तरग्रहणस्य मानसिक्यपि कल्पना तस्या आदर्शरूपस्य सतीत्वस्य विनाशक इत्यतो विधवायाः पत्यन्तरग्रहणकल्पनाऽपि खपुष्पायमाणैव भाति। यथा संन्यासविवाहः पापमूलम्, तज्जन्या सन्ततिरपिः —

चण्डाल प्रत्यवसित परिव्राजक तापसाः।

तेषां जातान्यपत्यानि चाण्डालैः सहवासयेदिति।। — स्मृतेः।

चाण्डालश्रोणगा भवति। तथैव द्विजातिषु विधवोद्वाहोऽधर्ममूलम्। सर्वस्वनाशनिदानं सर्वानर्थहेतुरपि गीयते। वर्णाश्रमधर्मे च यथा यादृक् सन्यासाश्रमगः पुमान् पूज्यः पुरुषसम्मानभाक् तथैव निवृत्तिधर्मिणी विधवापि सम्मानार्हं पूज्यं पदं नारीषु विन्दति।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११४।

इत्येवं निवृत्तिमार्गमारूढाया: सर्वपूज्यत्वमधिगताया विधवाया: पुनरुद्वाहादिना प्रवृत्ति–मार्गपातनस्यासम्भवात्तद्भ्रंशनस्य महापापनिदानत्वाच्च विधवोद्वाहो आकाशकुसुमवदसम्भव एवेति संक्षेप:।

प्रसङ्गत: कन्योद्वाहकालं निर्णयति: –

"कन्याऽवस्थायां प्राशस्त्यमुद्वाहस्य[1]"

नार्य्या धर्मस्य पारतन्त्र्यमूलकत्वाद्विवाहसंस्कारो हि नारीजातेर्मुख्य: संस्कार इत्यत: सूत्रकृत्तत्कालनिर्णयं वक्ति। रज: प्रवृत्तित: पूर्व नारी कन्याशब्दभाग् भवति। तस्यामेवाऽवस्थायां तस्या: परिणयसंस्कारो धर्म: शास्त्रसम्मतश्च तथा हि –

त्रिशंद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षा वा धर्मे सीदति सत्वर:।।
ऊर्ध्वं दशाद्वाद्या कन्या प्राग्ररजो दर्शनात्तु सा।
गान्धारी स्यात् समुद्वाह्या चिरञ्जीवितुमिच्छता।।
अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला।।
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमंती भवेत्।
विवाहोष्टमवर्षाया: कन्यायास्तु प्रशस्यते।।

इत्यादिभि: स्मृतिवाक्यैर्नार्य्या विवाहकालोऽष्टमवर्षात् आरभ्य द्वादशवर्षं यावत् सिध्यति। तत् ऊर्ध्वं रजस्वलात्वदोषदूषितत्वात्तदभ्यन्तरे कन्याया परिणयसंस्कारमनाचरतो–

---

१. कर्ममीमांसादर्शने, धर्मपादेसूत्रम् ११५

—ऽधिकर्तुः पापसम्पर्कः। उपर्युक्तानां वचसां पर्य्यालोचनया कन्याविवाहकालस्याष्टमवर्षतो द्वादशवर्षावधित्वविधानेन तत् पूर्वं परतश्च तस्य दोषावहत्वं सिध्यति। ततः पूर्वन्तु अतिवालिकात्वेन संस्कारसिद्धावेव वाधोऽपरतश्च —

सोमः प्रथमो विविदे गान्धर्वो विविद उत्तरः।
तृतीयोऽग्निस्ते पतिस्तुरीयस्ते मनुष्यजः।।
सोमोददद्गन्धर्वाय गन्धर्वो ददग्नये।
रथींश्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्।।

इत्यादिप्रमाणैः सार्द्धसप्तमवर्षं यावद् देवानामेव कन्यास्वधिकारस्य विद्यमानत्वात् मनुष्याधिकाराणामभावात् तन्मध्ये कन्यायादानं ग्रहणञ्चोभयमपि पापाधायकम् तथा "स्वसत्त्वनिवृत्तिपूर्वकपरसत्त्वोत्पादनरुपस्य दानलक्षणस्य तत्राऽसङ्गत्या दातुर्ग्रहीतुश्च व्यर्थः प्रयास इत्यत एवः —

"षडब्दमध्ये नोद्वाह्या कन्या क्वापि विचक्षणै"रिति।

**निषेधः** — "गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्ठादिति" विधिश्चोपलभ्यते, एवं द्वादशवर्षत ऊर्ध्वम् —

मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम्।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशता क्षयम्।।
द्वादशाद्वात्समारभ्य प्रतिमासं त्र्यहावधि।
रजः स्रवति नारीणां याति पञ्चाशतः क्षयम्।।

इति प्रमाणेन रजोदर्शनसम्भवात् पुरुषसम्वन्धेच्छोत्पत्या नारीजातेः प्रधानादर्शरुपस्य सतीत्वधर्मस्य विघातशङ्कया अवश्यम्भावात् ततः पूर्वमेव कन्याऽवस्थायां परिणयसम्पादनेन नारीजातेः पारतन्त्र्यधर्मस्य सुगुप्तिः सतीत्वधर्मविकाशस्यापि पूर्णोऽवसर इत्युभयमपि साधु समर्थ्यते।

ननु रजस्वलात्वदोषसम्भवभीत्या द्वादशाद्वत: पूर्वं दशवर्षता ऊर्ध्वं गान्धार्य्या: परिणयविधानन्तु समुचितं, किन्तु न्यूनानातिन्यूनतोऽष्टमवर्षस्य प्रारब्धावधित्वविधानं कथं सङ्गच्छत इति प्रश्नं समाधत्ते — यदा कन्याया: स्त्रीत्वचिह्नं लज्जा–संकोच–वस्त्रसम्वरणाव–गुण्ठनादिकं परिष्फुटं परिदृश्यते तदैव तदन्त:करणस्य पतिदुर्गगुप्त्याऽऽदर्शसतीत्वधर्मोदययोग्यत्व सम्पादनं समुचितमिति। प्रायोऽष्टमवर्ष एवैषां स्त्रीत्वाभिव्यञ्जकानां लक्षणानामुद्गमो दृश्यते। अपरतश्चाधिदैविक दृष्ट्या सार्धसप्तवर्षावधि देवानामधिकारस्य विद्यमानत्वात्तावत्कालं कन्यायास्तदधीनत्वात् तै: सर्वथा गोप्यमानाया: सतीत्वधर्ममर्यादाया: तेषामधिकारस्यापगत्या विघातशङ्क्या तद्रक्षार्थं कस्यचनाधिकारिणो हस्ते समर्पणं समुचिततममेव। अन्यतश्चा–ध्यात्मिकदृष्ट्या द्रष्टमवर्ष एव कुमार्य्या: पूजनं शास्त्रादौ विहितम्।

न च तदवस्थाया: कुमार्य्या: पतिसङ्गमायोग्यत्वात् तदानीन्तनपरिणयविधायक–शास्त्रस्याप्रामाण्यम्। आर्य्याणां विवाहसंस्कारस्य धर्मसंग्राहकत्वान्न कामतृप्तिमूलकत्वम्, सङ्गमकालस्य चान्यत्राऽन्यथापि विधानात्। सङ्गमकालस्तु —

पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धे गर्भाशये मार्गे रक्ते शुद्धेऽनिले हृदि।।
वीर्यवन्तं सुतं सूते ततोन्यूनाद्वयो: पुन:।
रोगाल्पायुरधन्यो वा गर्भो भवति नैव वा।।
ऊनषोडशवर्षायामप्राप्त: पञ्चविंशतिम्।
यद्याधत्ते पुमान गर्भं कुक्षिस्थ: स विपद्यते।।
जातो वा न चिरंजीवेज्जीवेद्वा दुर्वलेन्द्रिय:।
तस्मादत्यन्तवालायां गर्भाधानं न कारयेदिति।।

इत्याद्यायुर्वेद–स्मृति–देश–कालयात्राद्यनुचिन्तयैव निर्णय:।

प्रसङ्गतो नारी प्राधान्यं कुत्रेति निर्णयति: —

"सर्गे नार्य्या: प्राधान्यं कौशेयकीटवत्[१]"

यथा पुरुषजातीयकौशेयकीट: केवलं कौशेयतन्तुवीजमुत्पाद्य पृथग् भूत्वाऽवस्थान्तरे परिणमते स्त्रीजातीय एव कौशेयकीट: सर्वं कौशेय कृत्यं सम्पादयति तथैव सृष्टिक्रियायां स्त्राजातेरेव प्राधान्यम्।

तथा हि गर्भाधानक्षणाव्यवहितोत्तरक्षणेऽप्यकस्मात्पुरुष: पञ्चत्वमापद्येत चेन्न कोऽपि हानि: भ्रूणस्य। परन्तु यदि स्त्री गर्भाधानाऽवधितो दशमासाऽभ्यन्तरमपि विनाशमापद्येत चेन्नैव स्याद् वालोत्पत्ति: सर्वथा सर्जनक्रियैव निरुद्धा स्यात्। अतो जनन्या: स्थितिस्तु दशमासाऽवधिरावश्यकी मानवसर्गे। अत: सर्गक्रियायां नारीजाते: प्राधान्यमवश्यमङ्गीकरणीयम्।

प्रसङ्ग: सङ्गति सम्प्राप्तं नारीधर्मविज्ञानं पुष्णाति: —

"तच्छुद्धि संरक्षणं क्षेत्रवत्[२]"

सृष्टौनारीजाते:प्राधान्यात्तद्यासह तस्या एव गरीयान् सम्बन्ध:। अत: प्राधान्यशुद्धावेव सृष्टे: शुद्धिरित्यत् एव नारीजातेर्यावन्तो धर्मा: कर्तव्यानि च निर्दिष्टानि तत्र सर्वत्रैव नारी जाते: शुद्धरेवोद्देश प्रधानतया प्रतिपादित:।

यथा क्षेत्राणि कर्षणै र्नि:शर्कराणि प्रस्थररहितानि विधाय यावत् शुद्धानि कृतानि स्युस्तावदेव तत्र वीजोप्ति: साधीयसी स्यात्, शस्यञ्च साधु सम्पन्नं स्यात्, तद्वदेव

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११६।*
२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११७।*

नारीजातिर्यावत् सदाचारादिना पुरुषदुर्गरक्षया सतीत्वादिधर्मैश्च शुद्धा सुगुप्ता स्यात्, यावच्च तत्र नारीजातेरुपयोगिन: पारतन्त्र्यादिक: तासां स्वभाविका भावा वृद्धिं गता: स्युस्तावदेव मानवजातेर्मङ्गलं तत्सृष्टौ च सद्वुद्धि: प्रतिभा—सत्समृद्धिसमुदय: समेधित: स्यादिति विज्ञानाश्रयेणैव महर्षयो नारीधर्मान् प्रणीतवन्त: —

प्रसङ्गतो नारीधर्मनिदानं निर्वक्ति: —

"विफलं कामकलोत्तेजनम्[१]"

शुद्धे क्षेत्रे प्रशस्तशस्यसमृद्धये यथा वीजोप्ते: कौशलमपेक्षते तथैव शुद्धसन्तानाय गर्भधानसंस्कारसमये शास्त्रविधिना केवलं वीर्यदानमेव पुरुषस्य प्रधानं कर्त्तव्यं नेतरदित्यत: स्त्रियं चञ्चलां कृत्वा कामोन्मत्तात्वकरणमनावश्यकं विफलञ्च।

विषयानन्दभोगलोभत: पुरुष एवं स्त्रियं चञ्चलां करोति। स्त्री तु स्वभावत एव लज्जाधैर्य्यादिगुणावलीभि: पुरुषसन्निधौ धारावद्धीरवतिष्ठति। पुरुषेण चाञ्चल्य—विधानन्त्वस्वाभाविकम्, अत: कौमारावस्थायां सौभाग्यावस्थायां वा नारीसमीपे चाञ्चल्य कामोन्मत्तात्वचेष्टादि—विधारणं सर्वथाऽपि गर्हितमेव नार्य्या धैर्य्यसंस्थापनमेव प्रधानं पौरुषं कर्म।

विज्ञानदार्ढ्यायतुकमभिधत्ते —

"पापाय तत्[२]"

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११८।*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् ११९।*

स्त्रीषु कामकलोद्दीपनं पापजनकं स्त्रीणां क्षेत्रस्थालीयानां सुकुमारमतीनां कामकलोद्दीपनादिकृत्यं तासां स्वभावविरुद्धत्वात् तपोधर्मप्रातिकूल्याच्चाधर्मनिदानम्। यद्धि सत्त्वगुण वर्द्धके सदभ्युदयनिःश्रेयसप्रदं तद्धि पुण्यशब्देनोच्यते। यच्च तमोगुणवर्द्धकं सदधो नयति तत्पापमभिधीयते। अतश्च चाञ्चल्यमधैर्य्यं निर्लज्जतामूलकञ्च कामकलोत्तेजनं सर्वमपि नारीणां कृते पापाधायकमेव।

वैज्ञानिकं कारणं ब्रूते: —

"नैसर्गिकत्वविरहात्[१]"

नार्य्या चाञ्चल्योत्पादिकाया धैर्य्यशीलविरोधिकायास्तपोर्धनाशिकाया परमानन्दस्वरुपाया मुक्तेर्विरोधिन्याः कामकलायाः उत्तेजनं तत्स्वभावविरुद्धत्वात् सुतरामधर्मजनकम्। नारीजाते-धर्मस्य तपोमूलकत्वात् तस्यां धैर्य्यसंरक्षणस्य यावन्तो व्यापारास्त एव धर्मवर्द्धकास्त-द्विरोधिनश्चास्वाभाविका एव। कामप्रेम्णोरात्रिन्दिववत् परस्पर विरोधात्, प्रेमविरोधिनां कामोद्दीपकानां व्यापाराणामेव नारीजातिधर्मे निषेधः। यतोहि पापजनिका एतादृश्यो वृत्तयो नारीणां सहजस्वभाव विरुद्धा इति यत्नतो महर्षिभिर्निवारिताः।

इदानीं पुण्यजनकहेतुमाहः —

"पुण्याय तत् प्रसन्नता सर्गशुद्धिहेतुत्वात्[२]"

पूर्वसूत्रैः पापाधायककार्याणि निषिध्याधुना नारीसम्बन्धतः पुण्यजनककार्याण्याह — अनेन सूत्रेण — क्षेत्राणां शुद्ध्या यथा शस्यसमृद्धिर्जायते तथैव यत्र नार्य्यः प्रसन्नचेतसस्तिष्ठन्ति तस्या जातेस्तस्य कुलस्य वा ध्रुवमभ्युदयः सम्पद्यते। अभ्युदयहेतुश्चावश्यं पुण्याधायकः।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२०।

२. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२१।

सृष्टिशुद्धिश्च नारीशुद्धिमपेक्ष्यते। यतश्च नारीप्रसादस्य वृद्धिस्तद्धिकार्यजातं सृष्टिसम्बन्धतः पुण्यजनकमिति सुनिश्चितम्। सृष्टिशुद्धिश्च नारीशुद्धितः साध्यते। यतश्च सृष्टिशुद्धिस्तस्य पुण्यजनकत्वे नाणुरपि सन्देहाऽवसरः। पुण्यञ्च धर्मस्यैव परिणामः। धर्मत एव सर्गरक्षणम्भवतीति प्रागेवोक्तम्।

अतश्च धर्मसमेधमानां कार्य्याणां सृष्टिपावनत्वविधाने प्राधान्यं सृष्टेः पावित्र्यं हितस्या अभ्युदयनिदानमित्यपि न विस्मरणीयम्।

नारीजातेः क्षेत्ररुपत्वात् सृष्टेर्निदानत्वाच्च तस्याः प्रसन्नतया सृष्टेः पावित्र्योत्तमतयोः कः सन्देहः।

वैषयिकसम्बन्धतोऽपि नार्य्याः प्रसादस्योत्पत्तेः किन्तदेवैतस्य लक्ष्यमिति शङ्काया उत्तरमिदम् — यन्नहि वैषयिकप्रसन्नतामात्रं वस्तुतः प्रसन्नताशब्दवाच्यं भवितुमर्हति। यतोहि वैषयिकसुखप्रदाः प्रसन्नता क्षणिका परिणामे दुःखदैव। प्रत्युत सा प्रसन्नतैव नोच्यते या दुःखोदर्का स्यात्।

"धर्माविरुद्धोभूतेषु कामोऽस्मि भरतर्षभ! इति गीतोक्तेः — धर्मविरुद्धार्थकामौ दुःखदौ नरकप्रापकौ चेत्यतः धर्माऽविरुद्धाभावेव तौ समाश्रित्य धर्ममोक्षाऽवभिलक्ष्य वा सुसञ्जाता प्रसन्नतैव तत्छब्दवाच्या नान्या। धर्मसमेधकादि सद्व्यापारजन्यैव नारीजातीया प्रसन्नता सृष्टेः कल्याणकरी पुण्यार्जयित्री चेति संक्षेपः।

सम्प्रति सृष्टिप्रातिभाव्यम्ब्रूते: —

"प्रातिभाव्याधिक्यम्[१]"

सृष्टिकार्य्ये दम्पत्यो: समानेऽपि सम्बन्धे नार्य्या एव तत्र प्राधान्यमिति साधु साधितं प्राक्तनेन सन्दर्भसङ्गेन। अधिकारेण सहैव दायित्वाऽपरपर्य्यायं प्रातिभाव्यमपि संसक्तमेवास्ते इत्यपि सर्वतन्त्रसिद्धान्तसिद्धम्। यथा कस्यचन देशस्य यदि कश्चन शासक: स्यात्तर्हि तस्य देशस्योन्नत्यवनत्यादीनां सर्वेऽपि भारास्तस्यैव शिरसि संस्थिता भवेयुरिति। एवमेव नारीजाते: सृष्टौ प्राधान्यसत्वे तद्दायित्वमपि तस्यास्तथैव संसक्तम्।

उदाहरणतो यथा सृष्टिव्यापारे पुरुषस्य क्षणमात्रंप्रयोजनम्, नार्य्यास्तु दशमासान् व्यापारप्रयोजनमिति पूर्वमेवोक्तम्।

पुरुष: स्वव्यभिचारेण तु केवलं एकाकी एव पतति। नारी तु स्वैरिणी चेत् स्वात्मानं स्वकुलं स्वकुटुम्बं निजजातिमपि सर्वदा सर्वत: पातयेत्। नित्यपितॄणां सम्बन्धोऽपि तत्कुलात् तस्या जाते विंच्छिन्न: स्यात्।

इत्येवं सर्गकार्ये पुरुषापेक्षया नारीणामधिकारस्याधिक्यात् तासां तेन सह प्रातिभाव्यमपि समधिकमेव सिध्यति।

नार्य्या धर्मस्य मौलिकं विज्ञानं साधयति: —

"तपोरक्ष्यमत:[२]"

नारीणां तपोधर्म रक्षयैव कायवाङ्मानसशुद्ध्युपहित दायित्वम्प्रतिपालनम्भवितुमर्हतीति नारीधर्मस्य तपोमूलकत्वं प्राकृतिकनियमानुकूलमेव महर्षिभि: प्रतिष्ठापितम्। केवलस्य

---

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२२।*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२३।*

तपोधर्मस्यैव प्रतिपालनमेव नारी पूर्वोक्तं सर्वमप्यधिकारं प्राप्तुमर्हति। नाराजातेः सर्वेऽपि सदाचारास्तपोधर्मनिमित्तमाश्रित्यैव वेदशास्त्रादिषु निर्णीताः।

प्रसङ्गतः सतीभेदानाहः —

"सती चतुर्विधा[१]"

सृष्टेः स्वाभाविकभेदचतुष्टयं यथोद्भिज्जस्वेदजाण्डजजरायुजादिषु योनिषु, ब्राह्मण–क्षत्रियवैश्यशूद्रेषु वर्णेषु, ब्रह्मचर्यगार्हस्थ्य वानप्रस्थसंन्यासात्मकेषु चाश्रमेषु विद्यते, तथैवेहापि सतीषुनारीष्वपि महर्षिभिर्भेदाश्चत्वार उपदिष्टाः सर्वोत्तमोत्तममध्यमसाधारणभेदात् स्त्रियश्चतु–र्विधा भवन्ति इति।

तत्र सर्वोत्तमसती लक्षणमभिधत्ते —

"पतिमात्र पुरुषं मन्यमाना[२]"

सा हि प्रथमा सर्वमान्या सर्वोत्तमाख्या सतीहगण्यते, यस्या वुद्धौ स्वपत्यतिरिक्तं सर्वमेव जगत् स्त्रीमयं भाति। तस्या हि योगिदुर्लभेयं स्वपतितत्पराधारणा प्रबलतरा सदैवोदिता तिष्ठति, यतः पतितन्मयतापन्न मन्तःकरणमन्यथा परिणामानर्हमेव भवत्यतो देवदुर्लभेयमवस्था सर्वैरपि वन्दनीया।

उत्तमसती लक्षणम्ब्रूतेः —

"पुरुषान्तरं पित्रादिवज्जानती[३]"

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२४।
२. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२५।
३. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२६

तपोधर्मस्यैव प्रतिपालनमेव नारी पूर्वोक्तं सर्वमप्यधिकारं प्राप्तुमर्हति। नाराजाते: सर्वेऽपि सदाचारास्तपोधर्मनिमित्तमाश्रित्यैव वेदशास्त्रादिषु निर्णीता:।

प्रसङ्गत: सतीभेदानाह: –

"सती चतुर्विधा[1]"

सृष्टे: स्वाभाविकभेदचतुष्ट्यं यथोद्भिज्जस्वेदजाण्डजजरायुजादिषु योनिषु, ब्राह्मण–क्षत्रियवैश्यशूद्रेषु वर्णेषु, ब्रह्मचर्यगार्हस्थ्य वानप्रस्थसंन्यासात्मकेषु चाश्रमेषु विद्यते, तथैवेहापि सतीषुनारीष्वपि महर्षिभिर्भेदाश्चत्वार उपदिष्टा: सर्वोत्तमोत्तममध्यमसाधारणभेदात् स्त्रियश्चतु–र्विधा भवन्ति इति।

तत्र सर्वोत्तमसती लक्षणमभिधत्ते –

"पतिमात्र पुरुषं मन्यमाना[2]"

सा हि प्रथमा सर्वमान्या सर्वोत्तमाख्या सतीहगण्यते, यस्या बुद्धौ स्वपत्यतिरिक्तं सर्वमेव जगत् स्त्रीमयं भाति। तस्या हि योगिदुर्लभेयं स्वपतितत्पराधारणा प्रबलतरा सदैवोदिता तिष्ठति, यत: पतितन्मयतापन्न मन्त:करणमन्यथा परिणामानर्हमेव भवत्यतो देवदुर्लभेयमवस्था सर्वैरपि वन्दनीया।

उत्तमसती लक्षणम्ब्रूते: –

"पुरुषान्तरं पित्रादिवज्जानती[3]"

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२४।
२. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२५।
३. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२६

द्वितीयेमयुत्तमेत्युच्यते या स्वाऽवस्थयाऽभ्यर्हितान् पुंसः पितृवत् स्वसमवयस्कान् भ्रातृवत् स्वतो न्यूनाऽवस्थान् पुत्रवत् जानती अनुबुद्धमेव स्वमनोविकारे परिहरन्ती स्वपतिव्रतं संरक्षति। सत्या इयम् व्यवस्था प्रशंस्यैव। यतोहि धारणायामस्यां प्रकृतिजयः सर्वदैव तिष्ठति।

प्रथमायां हि सर्वोत्तमावस्थायां सती स्त्री स्वात्मानं वशीकृत्य पत्या सहाद्वैतभावं समश्नुत इति सर्वात्मना तादात्म्यं तत्र। अत्रापि द्वितीयायामुत्तमायां श्रेण्यां नारी स्वप्रकृतेर्जयं कुर्वती स्वमनोविकारमनुद्गतमेव निगृह्णती पित्रादिस्वरुपेण जगन्निभालयन्ती सतीमहिमानमेव प्रख्यापयते।

स्त्रियं निरीक्षमाणः पुरुषः स्वात्मानं पुरुषमभिमन्यमानः स्त्रीष्वासज्यते। नारी च पुरुषं निभालयन्ती स्वं नारीमभिमन्य पुमांसमाकर्षतीति प्राकृतिकः सांसारिको भावो द्वितीयश्रेणीस्थयाऽनया सत्या सर्वथा पराजीयत इत्यतः प्रकृतिनयरुपा निःश्रेयसप्रदेयमवस्थाऽपि संस्तुत्यैव।

मध्यमां तां निर्वक्तिः –

"मनसा[१]"

तृतीयं मध्यमा सती निगद्यते या दूषितं मनोविकारमुद्बुद्धमपि स्वविवेकतो निगृह्णती सतीधर्मं प्रयत्नेन गोपायति। अस्यां हि श्रेण्यां नार्य्याः पुरुषान्तर भानमवश्यं तिष्ठति।

---

१. कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२७

आकर्षणविकर्षणात्मकः प्राकृतिको भावोऽपि वर्तत एव। किन्तु तस्या आत्मसंयम एतावत् दृढत्वमुपगतो भवति, यत्सा स्वापवित्रान् कामसंकल्पान् प्रतिक्षणमुद्धर्तमानान् प्रबलेन मनोनिग्रहवलेन विलापयन्ती तेभ्यो मूलितुमवसरमेव न ददातीत्यत इयमप्यवस्थाऽभ्युदयप्रदेति न शङ्कनीयम्।

अन्तिमां साधारणीं लक्षयतिः —

"वपुषा स्थूलेन[1]"

चतुर्थीयमन्तिमा निरुच्यते या दूषितं स्वमनोविकारं निरोद्धुमसमर्था स्थूलेन शरीरेण तं निगृह्य कायं वाचं वा पवित्रे रक्षति इति। अस्यामप्यवस्थायां सती स्त्री स्वतपोधर्मप्रभावेण सहजलज्जादिना स्वाधीतशास्त्रबलेन च सतीत्वरक्षार्थं सर्वथा यतमाना सतीत्वसदाचारान् शास्त्रानुमोदितान् प्रतिपालयत्येव।

प्रसङ्गतो नार्य्याः स्वधर्मत्यागस्य दुरुदर्कं प्रख्यापयतिः —

"पुरुषभावापन्नाया नार्य्यास्त्रिविधः पातोऽनधिकारिब्रह्मविद्यादानवत्[2]"

यथाऽनधिकारिभ्योऽपात्रेभ्यो दत्तं ब्रह्मज्ञानं तस्य ग्रहीतुरेव कदाचारित्वादाधि– भौतिकीमपवित्रतां नास्तिक्याच्चाधिदैविकीमपवित्रतां यथार्थज्ञानधारणाऽक्षमत्वाच्चाध्यात्मिकी– मवनतिं चेति त्रिविधामप्यवनतिं कृत्वा तमनधिकारिणं गर्ते निपातयति। तथैव यदि नारी स्वीयं पारतन्त्र्यं सतीत्वं तपःशीलत्वं पावित्र्यं सन्ततिसम्वर्द्धनादिकं शास्त्रविहितं स्वाभाविकं धर्मं विहाय निरङ्कुशत्वं स्वाधीनत्वमपावनत्वं तपोराहित्यमितरच्च दोषजातं गृह्णती निर्लज्जा पुरुषभावापन्ना स्यात्तदा तस्या आधिभौतिकाधिदैविकाध्यात्मिक्यस्तिस्रोऽप्यवनतयोऽवश्यं भाविन्य इति नारीणां पुरुषायितं विगर्हिततरम्।

१. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२८*
२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् १२९*

अतो हि पुरुषभावापन्नतया सदाचारलोपतः शारीरिकापवित्रताया अवश्यम्भावात् नार्य्या आधिभौतिक्यवनतिः स्यात्। पतितन्मयतामूलकस्य सतीत्वसंस्कारस्य च विलोपेन मनोदौर्बल्यस्यावश्यम्भावात् आधिदैविकीहानिर्भवेत्। सृष्टिक्रमं परित्यज्य प्राकृतिकनियमविरुद्धं नारीधारायामेव पुरुषधारासाङ्कर्यकरणेन तत्र पुरुषभावमधिगताया नार्य्या आध्यात्मिक्यवनतिरपि सुनिश्चितैव। इत्येवं स्फुटं पुरुषायिताया नार्य्या अवनतित्रितयं परिदृश्यते।

यदि कश्चन जिज्ञासुरिह शङ्केत यत् स्वधर्मविनाशकाले राजविप्लवतश्च धर्म–विध्वंसावस्थोपस्थितौ अन्यस्यामपीदृश्यां धर्मबाधोपस्थितायां तथातिशयगुरुतर – दुःखाऽवस्थायां वा सुकुमारमतीनां नारीणां वीरोचितानां पौरुषाचाराणां पुरुषवृत्तीनां चाश्रयणं किन्न समुचित–मित्यस्योत्तरमाहः –

असाधारणधर्माधिकारिणी आहोस्विदापद्धर्माधिकारवती वा सती स्वधर्मगुप्त्यै स्वदेशजातिधर्म–समभ्युदयपरिचायकानाचारानाचरन्ती ईदृशीनां स्त्रीत्वाऽहङ्कारमूलानां वृत्तीनां परिचयप्रदानेनापि न नारीधर्मव्यत्ययः समाचरति। नापि तदीयमीदृगनुष्ठानं धर्मविरुद्धम्। प्रत्युत् धर्मवाधाव्यतिकरे नारीणां पुरुषायितं श्रुत्यादिभिरपि समर्थितम्। तथाहि –

"आरोहेममश्मानमेव त्वं स्थिरा भव।
अभितिष्ठ पृतन्यतोऽववाधस्व पृतनायतः।। इति।।

परन्तु अधिकारोऽयं तस्या असाधारण–धर्म्ममूलक आपद्धर्ममूलको वा गण्येत, न विशेषधर्मान्तर्गतः स्यान्नारीजातेस्तादृशधर्मस्याऽस्वाभाविकत्वात् इति संक्षेपः।

दुरुदर्कमयं दर्शयित्वा निश्चितोन्नति—सम्पादकमादर्शत्रयं दर्शयति —

"तदादर्शो दुर्गा गौरी महामाया च[1]"

तासां नारीणामादर्श आदर्शस्वरुपा इमास्तिस्रो दुर्गा—गौरी—महामाया चेति क्रमशः उत्तरोत्तरमभ्यर्हिता देव्यास्सन्ति इति सूत्रार्थः।

सृष्टेः प्रसवित्र्या पालयित्र्याश्च नारीजातेस्त्रयोदेवीभावा आदर्शस्थानीया, स्मृतीषूपपादिताः।

श्रीमहामायोवाचः —

नारीधर्मार्थमप्येवं मत्स्वरुपत्रयं सुराः।
ग्राह्यमादर्शरुपेण विश्वकल्याण सम्पदे।।
अहमेव महामाया प्रोच्ये भेदविवर्जिता।
गौरी भेदप्रधानाऽहं दुर्गाशक्ति प्रधानतः।।
एतद्रूपत्रयं नूनं सती नारी विभर्त्यहो।
पुण्ये भारतवर्षेऽस्मिन् नार्य्यजातौ प्रजायते।। इति।।

संक्षेपतोऽस्य स्वारस्यमिदं यत् —

प्रेम्णः प्रथमाऽवस्था "स ममेति। तत्र यदि स मम तर्हि तदीया विभूतयोऽपि ममैवेति दुर्गा देवीत्यस्य भावस्यादर्शः। प्रेम्णो द्वितीयाऽवस्था "अहं तदीयेति" तत्र पतिनिन्दाश्रवणमात्रेणैव स्वशरीरं जहती गौरी तदादर्शः। "अहं स चाभिन्नः" इति प्रेम्णोऽन्तिमः सीमा। तत्राद्वैतभावापन्ना महामाया सर्वोत्तमश्चरम आदर्शः।



---

१. दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता।
गृहीतदेशं निजयोगमाया प्रजापतिश्चाह जयेति विस्मितः।।
यत् तद् वायुर्भाति विभूषणायुधैरव्यक्तचिद् व्यक्तमधारयद्धरिः।
बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः।।
तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः। कर्माणिकारयामासुः पुरस्कृत्य प्रजापतिम्।।
— श्लो. ११—१३

# चतुर्थोऽध्यायः

१. धर्मानुसारिणः श्रीमद्भागवतोक्ताः संस्काराः

२. शिक्षा

३. ब्रह्मचारिणो नियमाः

४. सन्यासिनो नियमाश्च

# चतुर्थोऽध्यायः

## (१) धर्मानुसारिणः श्रीमद्भागवतोक्ताः संस्काराः

भगवतो वामनस्य प्रादुर्भावाच्छ्रीमद्भागवतस्याऽष्टमस्कन्धस्या सप्तदशोऽष्टादशो–ऽध्यायेगर्भाधान जातकर्मादीनां सङ्केतो विद्यते।[1]

एवमेव भगवतः श्रीकृष्णस्य प्रादुर्भावप्रसङ्गे श्रीमद्भागवतस्य दशमस्कन्धस्य द्वितीये–ऽध्याये वीर्याधानस्या[2]ऽष्टमाध्यायेनामकरणस्य[3] पञ्चचत्वारिंशेऽध्याये चोपनयनव्रतसमावर्तन

---

१. प्रविष्टमात्मनि हरेरंशं ह्यवितक्षेक्षणः। सोऽदित्यां तीर्थमाधत्त तपसा चिरसम्भृतम्।।
—श्रीमद्भागवत ८ अस्कन्धे १७ अध्याये, श्लो० २३

२. गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया। अहो विभ्रंशितो गर्भ इति पौरा विचुक्रुशुः।।
भगवानपि विश्वात्मा भक्तानाभयंकरः। आविवेशांशभागेनमन आनकदुन्दुभेः।।
स विभ्रत् पौरुषं रुपं भ्राजमानो यथा रविः। दुरासदोऽतिदुर्द्धर्षो भूतानां सम्वभूवह।।
ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी।
दधारसर्वात्मिकमात्मभूतं काष्ठा यथाऽऽनन्दकरं मनस्तः।। —श्लो. १५—१८।

३. अलक्षितोऽस्मिन् रहसिमामकैरपि गोव्रजे। कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम्।।
श्रीशुक उवाच —
एवं सम्प्रार्थित! विप्रः स्वचिकीर्षितमेवतत्। चकार नामकरणं गूढो रहसि वालयोः।।
गर्ग उवाच —
अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः। आख्यास्यते राम इति वलाधिक्यात् वलंविदुः।।
यदूनामविपृथग्भावात् संकर्षणमुशन्त्युत।।
आसन् वर्णास्त्रियो ह्यस्य गृह्णतोऽनुयुगे तनूः। शुक्लो रक्तस्तथापीत इदानीं कृष्णतां गतः।।
प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजाः। वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते।।
बहूनि सन्ति नामानि रुपाणि च सुतस्यते। गुणकर्मानुरुपाणि तान्यहं वेद नो जनाः।।
—श्लो १०—१५।

संस्काराणां[1] द्विपञ्चाशत्तमेऽध्याये विवाहसंस्कारस्य[2] निरुपणमस्ति। धर्मशास्त्रानुसारमेतेषां वर्णनमग्रेऽवलोकनीयम् —

इदानीं गर्भाधानकं प्रथमं वैदिकसंस्कारं निरुपयति: —

"आधानम्"[3]

षोडशसु संस्कारेषु प्रथमस्य संस्कारस्य आधानम् गर्भाधानमित्याख्या। अस्मिन् मृत्युलोके नरनारीसङ्गमेन मातृगर्भे मानवजन्म जायते। तत्रैव मातृपितृसम्बन्धतो जायमानायां क्रियायां गर्भाधान संस्कारस्य सम्बन्धा:।

---

१. *अथ शूरसुतो राजन्! पुत्रयो: समकारयत्। पुरोधसा ब्राह्मणैश्च यथावद् द्विजसंस्कृतिम्।।*
*तेभ्योऽदात् दक्षिणा गावो रुक्ममाला स्वलंकृता:। स्वलंकृतेभ्य: सम्पूज्य सवत्सा: क्षौमवासिनी:।।*
*या: कृष्णरामजन्मर्क्षे मनोदत्ता महामति:। ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृता:।।*
*ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ। गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ।।*
*प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ। नान्यसिद्धामलज्ञानं गूहमानौ नरे हितै:।।*
*अथो गुरुकुले वासमिच्छन्तावुपजग्मतु:। काश्यं सांदीपनिं नाम ह्यवन्तीपुरवासिनम्।।*
*यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम्। ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवदृतौ।।*
*तयो र्द्विजवरस्तुष्ट: शुद्धभावानुवृत्तिभि:। प्रोवाच वेदानाखिलान् साङ्गोपनिषदो गुरु:।।*
*सरहस्यं धनुर्वेदं धर्मान् न्यायपथांस्तथा। तथा चान्वीक्षिकीं र्विद्यां राजनीतिं च षड्विधाम्।।*
*सर्वं नरवरश्रेष्ठौ सर्वविद्या प्रवर्तकौ। सकृन्निगदमात्रेण तौ संग्रहतुर्नृप।।*
*अहोरात्रैश्चतुष्षष्ट्या संयतौ तावती: कला:। गुरुदक्षिणयाऽऽचार्य छन्दयाभासतुर्नृप।।*
*द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्यराजन्नतिमानुषीं मतिम्।*
*सम्मन्त्र्य पत्न्या स महार्णवे मृतं वालं प्रभासे वरयाम्बभूवह।।*
*तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ। दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतु:।।*
*सम्यक् सम्पादितो वत्स! भवद्भ्यां गुरुनिष्क्रय:। को नु युष्मद्विधगुरो कामानामवशिष्यते।।*
*गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी। छन्दांस्ययातयामानि भवन्त्विह परत्र च।।*
*गुरुणैवमनुज्ञातौ रथेनानिलरंहसा। आयातौ स्वपुरं तात! पर्जन्यनिनदेन वै।।*
*सम नन्दन् प्रजा: सर्वा: दृष्ट्वा रामजनार्दनौ। अपश्यन्त्यो वहवहानि नष्टलब्धधना इव।।*
*—(श्रीमद्भागवते दशमस्कन्धे ४५ अध्याये श्लोक २६—३७, ४६—५०)*

२. *आनर्ताधिपति: श्रीमान् रैवतो रैवतीं सुताम्। ब्रह्मणा चोदिता प्रादाद् वलायेति पुरोदितम्।।*
*भगवानपि गोविन्द उपयेमे कुरूद्वह!। वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयम्वरे।।*
*प्रमथ्य तरसा राज्ञ: शाल्वादींश्चैद्यपक्षगान्।*
*पश्यतां सर्वलोकानां तार्क्ष्यपुत्र: सुधामिव।।*
*—(श्रीमद्भागवते दशमस्कन्धे ५२ अध्याये श्लोक १५—१७)*

३. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् २२।*

सन्तानोत्पत्तेः पूर्वक्रियायाः आदिमवत्वात् संस्कारस्यास्य प्राथम्यम्। गर्भाधानसंस्कारस्य पीठविज्ञानमूलकत्वात् प्रथमं पीठविज्ञानरह ज्ञानमावश्यकम्। प्राणमयकोशे आवर्त–चक्रोत्पत्या देवताधिष्ठानक्षमं यत् स्थानमाविर्भवति तदेव पीठमित्युच्यते। पीठविज्ञानञ्च मध्यमीमांसाऽपरपर्य्याये दैवीमीमांसादर्शने विस्तरशः साधु विवृतम्। पीठविज्ञानस्य भेदास्तस्य गर्भाधानेन सह सम्बन्धश्च स्मृतिशास्त्रे निम्नाङ्कितविधया विवृतमुपलभ्यते। तथाहि –

द्वितीयं सहजं पीठं दम्पत्योः सङ्गमे भवेत्।
गर्भाधानस्वरुपस्य तस्य पीठस्य दम्पती।।
यौ मर्य्यादाञ्च पावित्र्यं पितरः स्मरतः सदा।
तथा दैवे च जगति श्रद्धालू यौ निरन्तरम्।।
यौ स्वस्मिन् सततं सत्त्वगुण लक्षणमीप्सितम्।
आधातुं यत्नमाधत्तः सन्ततौ हि तयोर्ध्रुवम्।।
उच्चाधिकार एतादृग् ध्रुवमायाति येन सा।
ज्ञातुमिष्टं सदा पुण्यां पूर्णधर्माधिकारताम्।।

गर्भाधान संस्कारो हि स्वपत्न्यां शुद्धे प्रथमे रजसि समाधीयते, यतो हि तदानीमेव स्त्रीमन्त्रपूता सती सुसन्तानप्रसवयोग्या भवति।

अत्र प्रथमे रजस्येव गर्भाधानसंस्कारस्यानुष्ठाने विहितेऽपि योग्यसन्तानोत्पादन कलाविधौ महर्षीणां परस्परमतवैषम्यमुपलभ्यते। तथाहि – अस्मिन् विषये शरीरविज्ञानविदां प्रथमाचार्यस्य सुश्रुतमहर्षे निर्देशोऽयम्। यत् –

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यथाधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते।।

जातो वा न चिरंजीवेज्जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तवालायां गर्भाधानं न कारयेत्।।[१]

तात्पर्यत आर्य्याणां विवाहसंस्कारो हि न कामवासनाचरितार्थतायै भवति ते हि पत्नीसंयोगं पवित्रतमं पीठोत्पत्तिनिदानञ्चामनन्ति। कालनियमविषये तु तदाचार्य्याणां स्वारस्यमिदं यत् पत्न्याः प्रथमरजस उद्गमे एव गर्भाधानसंस्कारस्य धार्मिको विधिरनुष्ठेयः। ततश्चोपयुक्त–वयस्कायां तस्यां गर्भाधानसंस्कारसिद्धान्तमाश्रित्य धार्मिकसन्ततिसमुत्पादनाय सङ्गमो विधेयः। स च पूर्वानुष्ठितसंस्कारानुरूप एवानुष्ठेयः। तत्रापि ज्यौतिष सिद्धान्तमाश्रित्य शुभे मुहूर्ते शुभानुष्ठानमिदं प्रयोज्यम्।

तदानीञ्च दम्पती उभौवपि धर्म दैवसाहाय्यञ्चापेक्षमाणौ योगयुक्तौ समाहितमानसौ भूत्वा प्रथममभ्यर्हितमिमं संस्कारं सम्पादयेतामिति महर्षीणामादेशः। प्रत्येकं सृष्टिक्रियायामेव दम्पत्योः शास्त्रीयविज्ञानानुसरणमावश्यकमित्येव वैदिक–प्रथम–संस्कार–रहस्यमवगन्तव्यम्।

**सम्प्रति चतुर्थ संस्कारं संसूचयति –**

**"जातकर्म"[२]**

इतः पूर्व स्थूलशरीरसम्बन्धिनां त्रयाणां संस्काराणां वर्णनमभिधाय सम्प्रति सूक्ष्मशरीरान्तःकरणाद्युन्नति साधकानां संस्काराणां मध्यतः प्रथमं जातकर्मसंस्कारमुपपादयति। ततश्चान्यान्यं संस्कारमुपपादयिष्यति यथावसरं महर्षिः।

गर्भे यावज्जीवस्तिष्ठति तावत् पूर्वजन्मस्मृतिस्तस्मिन् विद्यते। येन तत्र तस्यान्तःकरणीय संस्काराणामवसरो नोपतिष्ठते। तत्र तु केवलस्य स्थूलशरीरस्य संसिद्ध्यै दैवं साहाय्यमासाद्यते।

१. *सुश्रुत संहिता।*
२. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् २५।*

गर्भनिर्गमनवेलायां सङ्कुचितगर्भद्वारनिष्पेषणेन मातृकायतः पृथग् भूत्वा भूमौ पातेन च विगतपूर्वस्मृतिरेव जायते। येनेत आरभ्य तस्यान्तःकरणस्य संस्कारो उपेक्ष्यते। अत्र मृत्युलोके भूमिष्ठस्य तस्यान्तःकरणे मानसिक वलवृद्धिः स्यादिति तदानीं जातकर्मसंस्कारोऽनुष्ठीयते। तत्र मन्त्राः —

मेधान्ते मित्रावरुणौ मेधामग्निर्दधातु ते।
मेधान्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ।।
ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।
सनिं मेधामयासिषं स्वाहा।।[१]

इह मृत्युलोके मातृगर्भतो भूमिष्ठे जायमान एव शिशौ संस्कारोऽयमनुष्ठीयते, येन तस्य जातकर्मेति संज्ञा भवति। भूमाविहागमनात्पूर्वं जीवा स्थूलशरीरेणसह पूर्णसम्बन्धभाग् न भवति। तत्र पूर्वस्मृतिवलेन जीवो गर्भावासं स्थूलकायसम्बन्धञ्च स्वात्मनः कृते कारागार–निवासकल्पमामनुते। ततोऽपसरणवेलायामेव सर्वमपि पूर्वस्मृतिमेकपद एव विस्मृत्य तेनैव स्वस्थूलशरीरेण सम्बन्धभाग् भूत्वा अपूर्वलोके समागतमात्मानमुपलभ्यापवाहितानर्घरत्न एव रोदिति। अतस्तदानीमन्तःकरणवलमेव तस्य धर्ममार्गनिदर्शकमध्यात्मदृष्टप्रसारक्षमञ्च स्यादिति तद्दार्ढ्याय तस्य संस्कारस्य सुतरामपेक्षाऽस्ति।

सम्प्रति पञ्चमं संस्कारमाहः —

"नामकरणम्"[२]

जीवान्तःकरणे वलसञ्चारो यथा स्यादित्यत एवाऽयं संस्कारोऽनुष्ठीयते। नामरुपात्म–कत्वादस्य जगतो नाम्ना सह जातजीवस्य बलीयान् सम्बन्धः इति साधु परामृश्य पूर्वापरं पर्यालोच्य वर्णविभागक्रमेण नामकरणं तेन च तस्य जीवस्यान्तःकरणे विशेषबलेन सहाध्यात्माधिदैवबलप्रयोग इत्यस्य संस्कारस्य मुख्यं प्रयोजनम्।

---

१. *शुक्लयजुर्वेद अध्याय ३२, मंत्र १३।*

२. *कर्ममीमांसादर्शने संस्कारपादे सूत्रम् २६।*

मानवजातावाध्यात्माधिदैवबलसञ्चाराय तथाऽन्तःकरणसंस्कारशुद्ध्यै च नाम बहूपकारि भवतीति संन्यासाश्रमेऽपि नामान्तरं क्रियते। ब्रह्माण्डस्य समष्टिसत्ताया व्यष्टिसत्तायाः पार्थक्यसम्पादनाय नामैवैकं साधनमिति तदुपयोग इह जगति परमावश्यकः। अपरे च सर्वथा नामार्थप्रभावानुसारी जीवोऽस्मिन लोके बहुधा विचेष्टते। यादृश गुणंशक्तिसम्भूतन्नाम निर्धारितं स्यात् तादृशमेव संस्कारं तादृशमेवाध्यात्माधिदैवकर्मान्तःकारणिकं प्रभावं सुदृढं तस्मिञ्जीवे तदासञ्जयेदिति सर्वसम्मतः सिद्धान्तः। अतो नामकरणात्मकोऽयं संस्कारो हितकरः परमावश्यकश्च सम्मत आर्य्यजातिषु वेदमार्गानुगासु। स च संस्कारो देवर्षिपितृसाहाय्य–बलमालम्ब्य ज्योतिषधर्मशास्त्रानुसारतो देशकालपात्र विचारमाश्रित्य जातशिशोरैहलौकिक पारलौकिकाम्युदयमनुसन्धाय शुद्धार्थभाव–समृद्धिमन्नामनिर्धारणेन सम्पादनीय इति संक्षेपः।

सम्प्रति षष्ठं संस्कारं समादिशतिः –

"अन्नप्राशनम्"[१]

स्थूलसूक्ष्मयोरुभयोरपि शरीरयोः पोषकमन्नमेव। अन्नेनान्नमकोशस्य पुष्टी रक्षणञ्च जायते। अन्नेन प्राणा एङ्गन्ते। अन्नं हि मनसः प्रकृतेर्निदानम्। इदं हि दार्शनिकविज्ञानसिद्धम् यदन्नमयकोशप्रधानमेव प्राणिनां प्राणधारणम् इत्यत एव मातृदुग्धपानानन्तरं अन्नप्राशन–बेलायामयं संस्कारोऽनुमीयते। संस्कारोऽयं दैवसाहाय्येन शिशोरन्तःकरणं भविष्यत्काले सुदृढं योग्यञ्च विदध्यादिति वेदविधिना विधीयते। अपरञ्च वेदमन्त्राभिमन्त्रितान्नसम्बन्धेन शिशोरन्तःकरणे शुद्धसंस्कारमङ्कयित्वा निष्क्रमादयः संस्कारा अपि एतदन्तर्गता एव ज्ञेयाः।

श्रुतिरप्यन्नप्राशन संस्कारमहिमानं स्तौति –

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यस्तन्मांसं योणिष्ठस्तन्मनः। अन्नमयं हि सौम्य मनः। आपोमयः प्राणस्तेजोमयी वागिति। अतएव वेदे लिखितम् –

१. *कर्म्ममीमांसादर्शने संस्कारपादेसूत्रम् २७।*

अन्नपतेऽन्नस्य नो देह्यमनमीवस्य शुष्मिणः।
प्रप्रदातारं तारिष ऊर्ज नो धे हि द्विपदे चतुष्पदे।।[1]

'न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽन्नवत' इत्याधानम् (का. १६/६/८)। अध्वर्युणा व्रतपयसि दत्ते तत्र समिधमञ्यज्य दीक्षिताऽख्येऽग्नावादध्यात्। प्रत्ते इति वीप्सा प्रतिव्रतं समिदाधानप्राप्त्यर्था इति सूत्रार्थः। आग्नेयी उपरिष्ठाद्बृहती अष्टार्ण त्रिपादा चतुर्थो द्वादशार्णः। हे अन्नपते अन्नस्य पालक अग्ने, नोऽस्मभ्यमन्नस्य देहि। कर्मणि अत्र षष्ठी। अन्नं प्रयच्छ इति भावः। अनमीवस्य नास्ति अमीवा व्याधिर्येन तदनमीवं तस्य। शुष्मिणा शुष्यमिति बल नाम शुष्मं बलं विद्यते यस्मात्तत् शुष्मि तस्य। रोगनाशकं बलहेत्वन्नं प्रयच्छेत्यर्थ५। किञ्च दातारं प्रतारिषः अन्नस्य दातारं प्रकर्षेण 'प्रसमुपोदः पादपूरणे' (पा. ८/१/६) इति पादपूर्त्यै प्रोपसर्गस्य द्वित्वम्। अतिशयार्थ लोपसर्गभ्यासः। अभ्यासे भूयां समर्थं मन्यन्ते (नि. १०/४२) इति यास्कोक्तेः 'तृ प्लवनतरण्योः' लेटो मध्यमैकवचनं 'सिब्बहुलं लेटि' (पा. ३/१/३४) इति सिप्प्रत्ययः। 'अर्थधातुकस्य' (पा. ७/२/३५) इतीट्, छन्दसि धातोर्वृद्धिः लेटोऽडाटौ (पा. ३/४/९४) इति अडागमः 'इतश्च लोपः' (पा. ३/४/९७) इति लेट इकारलोपे रुत्वविसर्गौ। तारिष इति रुपम्। किञ्च नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ चतुष्पदे गवादौ च ऊर्जमन्नं धेहि धारय। यद्वाद्वौपादौ यस्य स द्विपात् तस्मै द्विपदे चत्वारः पादा यस्य स चतुष्यात् तस्मै 'पादः पत्' (पा. ५/४/३८) इति अन्तलोपे पदादेशः। द्विपदे मनुष्याय चतुष्पदे गवादये अन्नं धेहिदेहि जातावेकवचनम्'। सर्वेभ्यो नरपशुभ्योऽन्नं देहीत्यर्थः।[2] इति वेदेऽन्नस्यमहिमा समुपवर्णितः। "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्ष इति।"

**अधुनाऽष्टमं संस्कारमभिधत्तेः –**

**"उपनयम्"[3]**

---

१. *यजुर्वेदे ११ अध्याये, मन्त्र ८३।*

२. *महीधरभाष्यम्।*

३. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् २९।*

उप समीपे (गुरोः वेदस्याथवा स्वान्तर्निलीनमहाशक्ते) नीयते (द्विजो) येन तदुपनयनम्, उपनयनसंस्कारः। प्रवृत्तिमार्गस्यान्तिमो निवृत्तिमार्गाश्रिताध्यात्मोन्नतेश्च द्वारस्वरूपोऽयं संस्कारः। इतः परं येऽष्टौ संस्कारास्ते सर्वेऽपि निवृत्तिमार्गसंस्कारा अग्रिमसूत्रैरभिधास्यन्ते।

अयमुपनयनसंस्कारः चतुर्ष्वापि वर्णेषु केवलं द्विजातिष्वेव भवति। कामपरायणे शूद्रेषु नास्य संस्कारस्योपयोगः सम्भाव्यत इति न तेषां कृतेऽयं संस्कार उपदिश्यते। यतो हि कामेन सार्धमिन्द्रियाणां साक्षात्सम्बन्ध इतीन्द्रियविलासपरेषु शूद्रेषु संयमाभावो निश्चितः।

यद्यपि कामसाहाय्याचरणात् अर्थोऽप्यधोगामी तथापि धर्मसाहाय्यानुष्ठानेनोर्ध्वगाम्यपि स भवतीति माध्यस्थ्यं तस्य। अतो धर्ममोक्षसाहाय्यकस्यार्थस्याधिकारमाश्रितेषु वैश्येषु धर्माधिकारवत्सु क्षत्रियेषु मोक्षाधिकारेषु, विप्रेषु चास्य संस्कारस्य विधानं सङ्गच्छते।

अस्य संस्कारस्य स्वस्मिन् विद्यमानतयैवेमे द्विजशब्द वाच्या भवन्ति। यतो हि संस्कारेणानेनाधिभौतिकमधोगतं लक्ष्यं निरुध्यते। ऊर्ध्वगामिन अध्यात्मलक्ष्यस्य द्वारं विवृतं भवति। अस्मात् संस्कारात् तेषां द्वितीयं जन्म जायते। अतएव ते द्विजन्मान निगद्यन्ते। संस्कारेणानेन शुद्धो द्विजो गायत्रीमन्त्रस्य ब्रह्मसाक्षात्कारकारणस्याधिकारी भूत्वा वेदाध्ययनक्षमं पात्रत्वमासादयति।

तथा चौलकर्मणि वैदिकसंस्कारेण संस्कृतः पुमान् शिखामधिकरोति तथैवास्मिन् संस्कारे वेदविधिसंस्कृतः शुद्धो वटुः परमपवित्रं ब्रह्मोपासनानिदर्शनरुपं यज्ञोपवीतमासाद्य नन्दति। चौलसंस्कारे देवसाहाय्येन अध्यात्मलक्ष्योपयोगमाश्रयति एतस्मिंस्तु तस्याऽध्यात्म–लक्ष्यस्य स्थैर्यसम्पादनाय ब्रह्मोपासनायां याथार्थ्येनाधिकारमासादयति इति विवेकः।

अधुना नवमं संस्कारं निर्वक्तिः —

"ब्रह्मव्रतम्"[१]

मनोबुद्धिचित्ताऽहङ्कारात्मकेऽन्तःकरणचतुष्टये मनश्चित्ते जडत्वप्रधाने बुद्ध्यहङ्कारौ च चेतनत्वप्रधानौ, तत्राऽन्तःकरणमेव जीवानां बन्धनमुक्ति निदानम्। तत्र जडत्वप्रधानमन्तःकरणं बन्धनकारणं चेतनत्वप्रधानन्तु मुक्तिनिदानमिति विवेचनीयम्। संक्षेपादितः पूर्वं येऽष्टौ संस्कारा गर्भाधानादयोऽभिहितास्तत्र जडांशस्यैवाऽभ्यर्हितत्त्वमासीदितोऽग्रे येऽष्टौ ब्रह्मव्रतादयो वक्ष्यन्ते तत्र चेतनांशस्यैव प्राधान्यमूहनीयम्।

अन्यथापीदमवगन्तुं शक्यते यत् व्यतीतेष्वष्टसु संस्कारेषु दैवसाहाय्येन मानवस्य मनोबलं सञ्चीयते। आगामिष्वष्टसु व्रतस्य बुद्धिबलं समुपार्ज्यत इत्यनयोर्द्विधा विभिन्ना पद्धतिरष्टकयो परस्परविभिन्नयोर्द्वयोः।

ब्रह्मव्रतसंस्कारोऽयं प्रथमाश्रमस्य ब्रह्मचर्य्यस्य मूलाधारो निगद्यते। आचार्य्य सान्निध्यमुपेत्य दीक्षितोऽधिगतद्विजत्वलक्षणो वालो गृहीतप्रतिज्ञो भूत्वा श्रद्धयामुं संस्कारं स्वीकरोति। गुरुसेवाशुक्रसंरक्षण—तपोव्रत—मातृपूजनात्मकेन व्यूहचतुष्टयेन संस्कारोऽयं सुदृढः संरब्धा।

इह जगति लौकिकं वा पारलौकिकं वा किमपि ज्ञानं स्याद् गुरुशुश्रूषणं विना तस्य न सिद्धिर्भवतीति निश्चप्रचम्।

प्रसङ्गतः शक्तिः कतिथेत्याहः —

"शक्तिर्द्विधाऽऽकर्षणविकर्षणभेदात्"[२]

आकर्षणमाकृष्टिः स्वसमीवर्त्तिकरणम्, विकप्रणं विकृष्टिः। आकर्षणं च विकर्षणञ्च तयोर्भेदात् शक्तिर्द्विधा। द्वेविधे यस्याः सा द्वि प्रकारा भवति। पूर्वविज्ञानदार्ढ्याय विज्ञानं

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ३०।*

२. *कर्ममीमांसादर्शने धर्मपादेसूत्रम् ५७।*

वर्णयति। जगतोऽस्य स्थूलसूक्ष्मप्रपञ्चानां सर्वेष्वेवाङ्गेषु आकर्षणविकर्षणात्मिका द्विविधाशक्तिरुपलभ्यते। स्थूलप्रपञ्चे च परमाणुत आरभ्य ग्रहोपग्रहान्तेषु अनयोरेव शक्त्यो: कार्यं स्फुटं प्रतीयते। परमाणुमारभ्य ब्रह्माण्डं यावत् सर्वत्रैवाकर्षणविकर्षणे विलसत:। एकेन सृष्टिदशायां रजोगुणसाहाय्येन परमाणव आकृष्यन्तेऽन्येन लयकाले तम:साहाय्येन विकृष्यन्त इत्येताभ्यामेव सर्वपदार्थानामाविर्भावतिरोभावौ सम्पाद्येते। एकस्यैवाश्मन: काष्ठस्य वा परमाणुपुञ्जा: तस्योत्पत्तौ परस्परं संगत्य दृढाऽसम्पद्यन्ते, सैव तस्याश्मन: काष्ठस्य वा राजासिकावस्था अस्यामेवास्थायां तत् वर्द्धते। यदा तयोस्तामसिक: परिणामो भवति तदा तयोर्मिलिता: परमाणव: परस्परं विभिद्यन्ते। ते चाश्मकाष्ठे स्वस्वरुपतश्च्युते विनश्यतश्च। एकब्रह्माणस्यापि ग्रहोंपग्रहाणामीदृश्येवावस्थोहनीया। ग्रहोपग्रहाणां सृष्टिदशायां परमाणव: परस्परं वियुज्य ब्रह्माण्डस्यैव प्रलयं संसाधयत:। स्थूलस्येदमुदाहरणम् सूक्ष्मस्येतदाह — अन्त:करणेऽपि तद्वृत्तिरुपौ रागद्वेषवाकर्षणविकर्षणरुपौ भवत् इति। स्मर्यते चात्र: —

सम्बध्येतेऽथ शक्ती द्वे आकर्षणविकर्षणे।
दिवौकसो रागमूला शक्तिराकर्षणात्मिका।।
भवद्भिरवगन्तव्या समुद्भुता रजोगुणात्।
विकर्षणाऽऽरव्या या शक्तिरपरा द्वेषमूलका।।
अवद्यार्य्या भवद्भि: सा समुत्पन्ना तमोगुणात्।
आभ्यां द्वाभ्यां हि शक्तिभ्यां ब्रह्माण्डं निखिलं तथा।।
पिण्डं समस्तमाच्छन्नं सत्यमेतद् वदामि व:।
एतच्छक्तिद्वयं ह्यास्ते मयि नैवास्म्यहं द्वयो:।।
बलाच्छक्तिद्वयस्यास्य कर्मजातमथाऽखिलम्।
सम्विभक्तं द्विधा देवा:! उत्तरोत्तर वर्द्धकम्।
सृष्टे र्द्वन्द्वात्मिकाया मे वाहं वाहयत्यहो।।

ते हि शक्तीजीवात्मनोऽन्तःकरणे सदाकार्यसम्पादिके भवतः। तत्र विकर्षणशक्तेरिन्द्रियगणः केन्द्रम्। आकर्षणशक्तेश्च श्रीगुरुदेवः केन्द्रस्थानन्निगद्यते। यतो हि उद्दामा इन्द्रियप्रवृत्तयो जीवान् सततमधः पातयन्ति। ज्ञानाश्रयो जगद्गुरुरीश्वरोऽन्तःकरणे विधुत्य तानूर्ध्वं नेतुं साहाय्यमाचरतीति प्रतिक्षणमन्तःकरणे संग्रामः प्रचलति। इत्यत् एव लघुशक्तिसम्पन्नं शिष्यं गुरुशक्तिविशिष्टस्य ज्ञानदातुरीश्वरस्य जगद्गुरोः प्रतिनिधिस्वरुपः श्रीगुरुदेव ऊर्ध्वमुन्नेतुं यतते। यतोहि श्रीगुरुप्रसादमन्तरा जीवानां ज्ञानोन्नतिरसम्भाविनी। स्मर्यते च –

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।

तस्येते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।

लौकिकज्ञानोपलब्धयेऽपि गुरु प्रसादोऽपेक्ष्यतेऽलौकिकस्यातीन्द्रियस्य ज्ञानस्य प्राप्तिस्तु विना गुरुकृपामशक्यैव। सा तु सर्वथा श्रीगुरुदेवाश्रयैव तिष्ठति। इत्थम्भूतस्य श्रीगुरुदेवस्य शुश्रूषायोग्यतोपलब्धिरस्य ब्रह्मव्रतस्य प्रथमं व्यूहम्। मनोवायुः वीर्य्यमिति त्रयोप्येकमेव तत्त्वम्। इत्यतस्त्रयाणामेकस्यापि स्ववशीकारेण त्रयोऽपि स्वायत्ता भवन्तीति योगदर्शनसमर्थितमिदं विज्ञानम्। तत्रापि तेषु वीर्य्यसंयमनस्य इतरापेक्षया सारल्यादाधिभौतिकसम्बन्धसम्वलितत्वा–त्सर्वश्रेष्ठो महिमा। मनस आधिपत्याधिगतिमन्तरा बुद्धेर्विकाशोऽसम्भवः बुद्धिदार्ढ्यं विना इन्द्रियातीतस्य परमपुरुषोपलब्धिर्जीवस्य कृतेऽसम्भाविन्येवेति कारणतः ऊर्ध्वरितस्त्वसिद्ध्या मनस आधिपत्यं समपाद्य बुद्धितत्त्वविकाशद्वारा ब्रह्मप्राप्तिनिदानं भवतीति संस्कारोऽयं ब्रह्मव्रतमिति शब्देनोच्यते इति हि द्वितीयव्यूहविज्ञानम्।

केवलं गुरुशुश्रूषामूलकेनाचारेणैव ब्रह्मचर्य्याश्रमस्य धर्मः परिपूर्णो भवति। ब्रह्मचर्य्या–श्रमाचाराणां परिशीलनेनास्य संस्कारस्य तपोमूलकत्वं स्फुटं प्रतीयते इति तृतीयव्यूह–विज्ञानम्।

ब्रह्मचर्य्याश्रमस्य यथावत् परिपालन तु तदैव सम्भवति यदा ब्रह्मचारी जगतीतलस्थासु सर्वास्वपि नारीषु मातृभावनया व्यवहरेत्। प्रथमतः पृथिवीतलस्थासु सर्वास्वपि स्त्रीषु मातृभावकल्पनामन्तरा ब्रह्मचर्य्यपरिपालनमेव पूर्णतो न सम्भवति, द्वितीयतश्च भिक्षादियाचना–माचारो मातृपूजनविधानार्थमेवास्मिन्नाश्रमे विहितो विद्यते। एतदेव चतुर्थव्यूह रहस्यम्। एवञ्चचतुर्व्यूहात्मक धर्मानुष्ठानेन ब्रह्मव्रताधिकारी आश्रमधर्मभित्तिं द्रढयति।

इदानीं दशमं संस्कारं निर्वक्तिः

"वेदव्रतम्"[१]

सर्वाश्रमाधारस्वरुपेऽस्मिन् प्रथमे ब्रह्मचर्य्याश्रमे प्रवेशवेलायामेवास्य संस्कारस्य प्रारब्धिः। ब्रह्मचारी हि सावित्री–समाराधनतत्पर आचार्य्यसेवापरायणो ज्ञानप्राप्तयेऽमुं संस्कारं स्वीकरोति। अनेन संस्कारेण संस्कृतो हि ब्रह्मचारी वेदानुकूलानाञ्च शास्त्राणां चाऽध्ययनेन कृतकृत्यो भूत्वा नन्दति।

एतत्संस्कारसाहाय्येनैव ब्रह्मचारी गुरुकृपामधिगम्य कुशाग्रशेमुषीसम्पन्नो भूत्वा सुमेधया समेधितः पवित्रस्य ज्ञानस्योपार्जने प्रवृत्तो भवति। कुतर्करुपं मूषकं वाहिनीकृत्य यथा गणपतिदेवो बुद्धिसम्राट् भूत्वा बुद्ध्यधिष्ठाता सन् सर्वदेवाऽभ्यर्हितः सर्वप्रथमपूज्यता–माश्रयति। तथैव वेदव्रतसंस्कारसंस्कृतो द्विजातिः कुतर्कबहुलजल्पवितण्डा प्रयोगविरहितः वेदशास्त्रानुकूल ज्ञानपद्धत्या प्रचलन्नन्ते ऋतभरायाः प्रज्ञाया अपि अधिकारी भवति इति सुस्पष्टं विज्ञानमेतस्य। ऋतम्भराप्रज्ञाद्युतौ रामकृष्णौ गुरवेमृतपुत्रं, ब्राह्मणायमृतपुत्रं मात्रेमृत–पुत्रांश्चानीय दत्तवन्तौ दर्शयामासतुश्च।[२]

---

१. *कर्ममीमांसादर्शनसंस्कारपादेसूत्रम् ३१।*

२. *तथेत्यथारुह्य महारथौरथं प्रभासमासाद्य दुरन्तविक्रमौ।*
*वेलामुपव्रज्य निषेदतुः क्षणं सिन्धुर्विदित्वार्हणमाहरत्तयोः।।*
*तमाह भगवानाशु गुरुपुत्रःप्रदीयताम्। योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा।।*

*—क्रमशः अग्रे पृष्ठे*

**समुद्र उवाच —**

नैवाहार्षमहं देव दैत्यः पञ्चजनो महान्। अन्तर्जलचरः कृष्ण! शङ्खरुपधरोऽसुरः।
आस्ते तेनाहतोनूनं तच्छ्रुत्वा सत्वरं प्रभुः। जलमाविश्य तं हत्वा नापश्य दुदरेऽर्भकम्।।
तदङ्गप्रभवं शङ्खमादायरथमागमत्। ततः संयमनीं नाम यमस्य दयितां पुरीम्।।
गत्वा जनार्दनः शङ्खं प्रद्दध्यौ सहलायुधः। शङ्खनिर्हादमाकर्ण्य प्रजासंयमनो यमः।।
तयोः सपर्यां महतीं चक्रे भक्त्युपवृंहताम्। उवाचाऽवनतः कृष्णं सर्वभूताशयालम्।।
लीलामनुष्य हे विष्णो युवयोः करवाम किम्।

**श्रीभगवानुवाच —**

गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम्। आनयस्व महाराज! मच्छासन पुरस्कृतः।।
तथेतितेनोपानीतं गुरुपुत्रं यदुत्तमौ। दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः।।

— (श्रीमद्भागवते दशमस्कन्धे ४५ अध्याये, श्लोक ३८—४६)

**देवक्युवाच —**

राम रामाऽप्रमेयात्मन् कृष्ण! योगेश्वरेश्वर!। वेदाऽहं वां विश्वसृजामीश्वरावादिपुरुषौ।।
चिरान्मृतसुतादाने गुरुणा काल चोदितौ। आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम्।।
तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ। भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान्।।

**ऋषिरुवाच —**

एवं सञ्चोदितौ मात्रा रामःकृष्णश्च भारत!। सुतलं संविविशतुर्योगमायामुपाश्रितौ।।
तस्मिन् प्रविष्टावुपलभ्य दैत्यराट् विश्वात्मदैवं सुतरां तथात्मनः।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः।।
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद् यदम्बुह।।
समर्हयामास सतौ विभूतिभिर्महार्हवस्त्राभरणाऽनुलेपनैः।
ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्म समर्पणेन च।।
स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया।
उवाच हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम्।।

**बलिरुवाचः —**

नमोऽनन्ताय वृहते नमः कृष्णाय वेधसे। सांख्ययोगवितानाय ब्रह्मणे परमात्मने।।
न विदन्त्यपि योगेशा योगमायां कुतो वयम्।।
इदमित्थमितिप्रायस्तव योगेश्वरेश्वर!। न विदन्त्यपि योगेशा योगमायां कुतो वयम्।।
शाध्यत्मनिशितव्येश! निष्पापान् कुरु नः प्रभो!। पुमान् यच्छ्रद्धयाऽऽतिष्ठंश्चोदनाया विमुच्यते।।

**श्री भगवानुवाचः —**

आसन् मरीचेः षट्पुत्रा ऊर्णायां प्रथमेऽन्तरे। देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम्।।
तेनासुरीमगन् योनिमधुनाऽवद्यकर्मणा। हिरण्यकशिपोर्जाता नीतास्ते योगमायया।।
देवक्या जठरे जाता राजन् कंसविहिंसिताः। सा ताञ्छोचत्यात्मजान् स्वांस्त इमेऽध्यासतेन्तिके।।
इत एतान् प्रणेष्यामो मातृशोकापनुत्तये। ततः शापाद् विनिर्मुक्ता लोकं यास्यन्ति विज्वराः।।
स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद्घृणी। षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम्।।
इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ। पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम्।।
तान् दृष्ट्वा वालकान् देवी पुत्रस्नेहस्नुतस्तनी। परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः।।
अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता। मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते।।
पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः। नारायणाङ्ग संस्पर्श प्रतिलब्धात्मदर्शनाः।।

— क्रमशः अग्रे पृष्ठे

ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम्। मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम्।।
तं दृष्ट्वा देवकी देवी मृतागमन निर्गमम्। मेने सुविस्मिता मायां कृष्णस्य रचितां नृपः!।।
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः। वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत!।।
— (श्रीमद्भागवते दशमस्कन्धे ८५ अध्याये श्लोक २९, ३०, ३२–३९, ४६–५८)
तदाह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ। मौढ्यं पश्यत मे योऽहं श्रद्धये क्लीबकत्थनम्।।
न प्रद्युम्नो ना निरुद्धो न रामो न च केशवः। यस्य शेकु परित्रातुं कोऽन्यस्तदवितेश्वरः।।
धिगर्जुनं मृषावादं धिगात्मश्लाधिनो धनुः। दैवोपसृष्टंयो मौढ्यादानिनीषति दुर्मतिः।।
एवं शपति विप्रर्षौ विद्यामासाद्य फाल्गुनः। ययौ संयनीमाशु यत्रास्ते भगवान् यमः।।
विप्राऽपत्यमचक्षाणस्तत ऐन्द्रीभयात् पुरीम्। आग्नेयीं नैर्ऋतिं सौम्यां वायव्यामथ वारुणीम्।।
रसातलं नाकपृष्टं धिष्ण्यान्यन्यान्युदायुधः।। अग्रेऽप्यवलोकनीयम् —
ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः। अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता।।
दर्शये द्विजसूनूंस्ते माऽवज्ञात्मानमात्मना। कीर्तिं त एते विमलां स्थापयिष्यन्ति मानवाः।।
इति सम्भाष्य भगवानर्जुनेन सहेश्वरः। दिव्यं स्वरथमास्थाय प्रतीचीं दिशिमाविशत्।।
सप्तद्वीपान् सप्तसिन्धून् सप्तसप्तगिरीनथ। लोकाऽलोकं तथातीत्य विवेश सुमहत्तमः।।
तत्राश्वा शैव्यसुग्रीवमेघपुष्पवलाहकाः। तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ!।।
तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः। सहस्रादित्यसंस्काशं स्वचक्रं प्राहिणोत् पुरः।।

तमः सुघोरं गहनं कृतं महत् विदारयद् भूरितिरेण रोचिषा।
मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः।।

द्वारेण चक्रानुपथेन तत्तमः परं परं ज्योतिरनन्तपारम्।
समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽविदधेऽक्षिणीद्वये।।

ततः प्रविष्टः सलिलं नभस्वता वलीय सैजद् वृहदूर्मिभीषणम्।
तत्राऽद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम्।।

तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः।
बिभ्राजमानं द्विगुणोल्वणेक्षणं सिताचलाभं शितिकण्ठजिह्वम्।।

ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम्।
सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम्।।

महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्त सहस्रकुन्तलम्।
प्रलम्ब चार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्मं वनमालया वृतम्।।

सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः।
पुष्ट्या श्रिया कीर्त्यजया खिलर्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम्।।

बवन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शन जातसाध्वसः।
तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा।।

द्विजात्मजा मे युवयोर्दिदृक्षयामयोपनीता भुविधर्मगुप्तये।
कलाऽवतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्ति मे।।
कलाऽवतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्ति मे।।

पूर्णकामावपियुवां नरनारायणावृषी। धर्ममाचरतं स्थित्यै ऋषभौ लोकसंग्रहम्।।
इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना। ओमित्यानम्य भूमानमादाय द्विजदारकान्।।
न्यवर्ततां स्वकं धाम सम्प्रहृष्टौ यथासुखम्। विप्राय ददतुः पुत्रान् यथारुपं यथावयः।।
— (श्रीमद्भागवते दशमस्कन्धे ८९ अध्याये, श्लोक ४०–६२)

अधुनैकादशं संस्कारं स्मरति –

"समावर्तनम्"[1]

सर्वाश्रमाधारस्वरूपेऽस्मिन् ब्रह्मचर्याश्रमे प्रवेशवेलायामेवाऽस्य संस्कार प्रारब्धि:। ब्रह्मचारी हि सावित्री–समाराधनतत्पर–आचार्यसेवापरायणो ज्ञानप्राप्तयेऽमुं संस्कारं स्वीकरोति। अनेन संस्कारेण संस्कृतो हि ब्रह्मचारी वेदानां वेदाऽनुकूलानाञ्च शास्त्राणामध्ययनेन कृतकृत्योभूत्वा नन्दति।

सम्यक् वेदान् वेदौ वेदं वाऽधीत्य गृहे आवर्तनं पुनरुपस्थिति: समावर्तनं इति सूत्रार्थ:। ब्राह्मणसन्ततीनां कृते संस्कारोऽयं महत: सन्धेराश्रय:। यतो हि पञ्चविंशतिवार्षिको ब्राह्मणवटुरधीत चतुर्दशविद्योऽत: परं दारग्रहणं कुर्वन् गृहस्थाश्रमं प्रविश्य सृष्टिक्रमं चालयितुमर्हति। आहोस्वित् इत एव निर्विद्य संसारासारतां विभावयन् संन्यासाश्रमं प्रवेष्टुं क्षमते। इत्थञ्च उभय संस्कारेऽस्मिन् अयं विशेषोऽन्येभ्य: संस्कारेभ्य:।

अत्र यदि द्विजो ब्रह्मचारी गृहस्थाश्रमं प्रविविशु: स्यात्तर्हि तस्याऽन्यथैव स्यात् संस्कारव्यवस्थिति:।

तथा हि प्रथमे पितुरभ्यर्हितत्त्वम् द्वितीयेऽस्मिंस्तु श्रीगुरुदेवस्य प्राधान्यमिति विभेद:। गृहस्थाश्रमे कर्मणां समारम्भेण प्रवृत्तिमार्गसंशोधनम्। चरमे च वैराग्यज्ञानप्रधानतया निवृत्ति–मार्गस्यापि चरमा कोटिराश्रीयत इति महदान्तर्य्यम्।

द्वादशं संस्कारं लक्षयति: –

"उद्वाह:"[2]

---

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ३२*

२. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ३३।*

उदुह्यते (परेण पत्नी) यस्मिन् संस्कारे स उद्वाहो विवाह इत्यर्थः। उद्वाहसंस्कारे यानि कानिचिद् वैदिककृत्यानि क्रियन्ते तेषां विस्तृतवर्णनमत्र निष्प्रयोजनं मत्वा विधीनामवर्णनं विधाय तेष्वन्तर्निहितभावानां वर्णनं क्रियते। तेषु भावेषु संयमात् विचारवन्तो मनुष्या एवं ज्ञातुं शक्यन्ते यत् अन्यदेशीय विवाह पद्धत्या सहार्य्यजातीय विवाहपद्धतेराकाश–पातालवदन्तरमस्ति। अर्थात् अन्यदेशीयविवाहः केवलं स्थूलेन्द्रियसेवार्थं स्त्रीपुरुषयोः स्वल्पकालस्थायि लौकिकसम्बन्धमात्रमेवास्ति किन्त्वार्यजातीय विवाहो दम्पत्यो रात्मा–मनः–प्राण–शरीरादीनां पारस्परिक प्रमाणऽऽध्यात्मिकसम्बन्धद्वारा द्वयोरेव मोक्षलाभार्थं चिरस्थायी प्रयत्नो वर्तते। दृष्टान्तरुपेणान्यदेशीयविवाहरीतीनां किञ्चिद्दिग्दर्शनं क्रियते।

१. एकस्मिन्नेवासने स्थित्वा एकेनैव पात्रेण दम्पत्योर्भोजनकरणादेव ब्रह्मदेशीया (वर्मा) तयोः पतिपत्नीभावं स्वीकुर्वन्ति। एकं जम्बीरमथवाऽन्यत् किमपि फलं कर्तयित्वा तदर्धभागं पतिःपत्नी–मुखे, अर्द्धं च पत्नीपति–मुखे भक्षणार्थं दानेनैव चीनदेशीया जापानदेशीयाश्च तयोर्विवाहं स्वीकुर्वन्ति।

२. मुस्लिमेष्वपि एकस्मिन्नेवासने स्थित्वा एकेनैव पात्रेण दम्पती परस्परमन्योन्यं खाद्यपदार्थं खादयतस्तदैव तयोर्विवाहकार्यं सम्पन्नमवगच्छन्ति। किन्तु मुस्लिमेषु कन्यायाः स्वीकृतिरेव विवाहस्य मूलमन्त्रं मन्यते।

३. क्रेश्चियनेषु अपि पुरोहितस्य (पादरी) मन्त्रपठनं दम्पत्योर्मुखे मुखसंयोजनमेव विवाहस्य स्वीकृतिर्मन्यते। अतः स्त्रीपुरुषयोः परस्परोच्छिष्टभोजनात्मको क्षुद्रव्यापार एवान्यजातिषु विवाहस्य प्रधानमङ्गं अवगम्यते, एतत् सिद्धं जातम्। अनेन सहाऽऽर्य्यजातीयशुभविवाहस्य धर्मजगति कियान् प्रभेदोऽस्तीति उपर्युक्तवर्णनेनाऽधोदिग्दर्शनेन चानायासेनैव ज्ञातुं शक्यते।

विवाहसंस्कारेऽन्यान्यकृत्यानामनन्तरं कन्यादानसङ्कल्पसमये समस्तदेवेभ्य आशीर्वादं गृहीत्वा विवाहकार्यं शुभभावमयं निर्मीयते –

ब्रह्मवेदपतिः शिवः पशुपतिः सूर्यो ग्रहाणां पतिः,

शक्रोदेवपतिर्हविर्हुतपतिः स्कन्दश्च सेनापतिः।

विष्णुर्यज्ञपतिर्यमः पितृपतिः शक्तिः पतीनां पतिः

सर्वे ते पतयः सुमेरुसहिताः कुर्वन्तु वो मङ्गलम्।।

इत्थं मङ्गलसूचकब्रह्मादिदेवानां नामोच्चारणानन्तरं दशमहादानानि दीयन्ते, यत्रापि विशेषपवित्रता आस्तिकता च लभ्यते। सुवर्णदाने यथाः –

हिरण्यगर्भसम्भूतं सौवर्णं चांगुलीयकम्।

सर्वप्रदं प्रयच्छामि प्रीणातु कमलापतिः।।

तदनन्तरं धेनुदाने यथाः –

यज्ञसाधनभूता या विश्वस्याघौथनाशिनी।

विश्वरुपधरोदेवः प्रीयतामनया गवा।।

तदनन्तरं पृथिवीदानेः –

सर्वेषामाश्रया देवी बराहेण समुद्धृता।

अनन्तशस्यफलदा अतः शान्तिं प्रयच्छ मे।।

विवाहविधाने तत् सर्वं माहात्म्यमस्ति। तदनन्तरमेकासने स्थित्वा आज्याहुतिदानकाले वरकन्याभ्यां पठ्यमानानां मन्त्राणामपि पवित्रतमो महान् भावो वर्तते। यथा – देवश्रेष्ठो–ऽग्निरत्रागच्छतु, स अस्याः कन्यायाभविष्यत्सन्तानान् मृत्युमभयाद्रक्षतु आवरण–देवताश्चैतादृशीमाज्ञां कुर्युर्यत् स्त्रीरियं पुत्रसम्बन्धीयव्यसनात् पीडिता न स्यात् इति।

२. गार्हपत्योऽग्निरस्या रक्षां विदधातु अस्या पुत्रो आवृद्धं जीवतु, इयं जीवितपुत्रिका भूत्वा पत्या सह निवसतु तथा सतपुत्रजनिताऽऽनन्दमनुभवतु।

३. हे कन्ये! द्युलोकस्तेपृष्ठं वाय्वश्विनौ ऊरु, सूर्यस्ते दुग्धपायिनः पुत्रान् रक्षतु।

इत्थमाज्याहुत्यनन्तरं लाजाहुतिर्दीयते, यत्र पत्नीतः पत्युः शतायुषः प्रार्थना क्रियते तथा पतिः सकाशात् अभिन्नदाम्पत्यप्रेमणः प्रार्थना क्रियते लाजाहुतिना सह यो लौकिकगाथा कथनस्य विधिर्वर्तते सोऽप्यपूर्वरसपूर्णो वर्तते। यथा –

राघवेन्द्रे यथासीता विनता कश्यपे यथा।
पावके च यथा स्वाहा तथा त्वं मयि भर्तरि।।
सुदक्षिणा दिलीपे च वसुदेवे च देवकी।
लोपामुद्रा यथाऽगस्त्ये तथा त्वं मयि भर्तरि।।
अत्रौ यथाऽनसूया च जमदग्नौ च रेणुका।
श्रीकृष्णे रुक्मिणी यद्वत्तथा त्वं मयि भर्तरि।।

एतादृक् वरकन्ययोर्मधुरपवित्रदाम्पत्यभावार्थं प्रार्थनेयं वर्तते।

लाजाहुतिसमाप्तौ सप्तपदीगमनं भवति। पतिरेकैकं वाक्यं कथयति तथा कन्या एकैकं पदं निक्षिपन्ती किमपि कथयति। तानि सर्वाणि वाक्यानि सन्ति निम्नाङ्कितानि –

वरोक्तयोग्यवाक्यानि यथा – 'ॐ चत्वारि पञ्च पशुभ्यो विष्णुस्त्वा नयतु। ॐ षड् ऋतुभ्यो विष्णुस्त्वा नयतु। ॐ सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु।'

ततः प्रतिपादप्रक्षेपे कन्या एकैकं श्लोकं कथयति। यथा –

धनं धान्यञ्च मिष्ठान्नं व्यञ्जनाद्यञ्च यद्गृहे।
मदधीनञ्च कर्त्तव्यं वधूराद्ये पदे वदेत्।। "

कुटुम्बं रक्षयिष्यामि सदा ते मञ्जुभाषिणी।
दुःखे धीरा सुखे हृष्टा द्वितीये साऽब्रबीद् वचः।।

पतिभक्तिरता नित्यं क्रीडिष्यामि त्वया सह।
त्वदन्यं न नरं मध्ये तृतीये साऽब्रवीदिदम्।।
लालयामि च केशान्तं गन्धमाल्यानुलेपनैः।
काञ्चनैर्भूषणैस्तुभ्यं तुरीये सा पदे वदेत्।।

आर्ते आर्ता भविष्यामि सुखदुःखविभाविनी।
तवाज्ञां पालयिष्यामि पञ्चमे सा पदे वदेत्।।
यज्ञे होमे च दानादौ भविष्यामि त्वया सह।
धर्मार्थ काममोक्षेषु वधूः षष्ठे पदे वदेत्।।
अत्रांशे खाक्षिणो देवा मनोभावप्रबोधिनः।
वञ्चनं न करिष्यामि सप्तमे सा पदे वदेत्।।

एतत् सर्वं सप्तपदीयगमनकाले पत्न्याः प्रतिज्ञा वाक्यमस्ति। येन स्त्री स्वगोत्रं परावर्त्य पत्युर्भवति विवाहसम्बन्धश्च दृढ़बद्धो जायते। एतदनन्तरं वरद्वारा वधूः शिरसि अभिषेकं विधाय वधू द्वारा ध्रुवदर्शनानन्तरं वरो वध्वाः दक्षिणस्कन्धतो हस्तं निधाय –

ॐ मम व्रते ते हृदयं दधामि, मम चित्तमनुचित्तं ते अस्तु।
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्।।

मन्त्रमिमं पठित्वा वरो वधू–हृदयं स्पृशेत्। तदनन्तरं वधूं पश्यन् –

ॐ सुमङ्गलीरियं वधूरिमां समेत पश्यत।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन।।

मन्त्रमिमं पठेत्। ततो देशाचारानुसारं वधूवरवामाङ्गे स्थापयेत्, वरवामाङ्गभूता वधू श्लोकैः सप्तप्रतिज्ञा वचनं कथयति। यथा –

तीर्थव्रतोद्यापनयज्ञदानं मया सहत्वं यदि किन्नकुर्याः।
वामाङ्गमायामि तदा त्वदीयं जगाद् वाक्यं प्रथमं कुमारी।।
हव्यप्रदानैरमरान् पितॄंश्च हव्यप्रदानैर्यदि पूजयेथाः।
वामाङ्गमायामि तदा त्वदीयं जगाद कन्या वचनं द्वितीयम्।।
कुटुम्बरक्षाभरणे यदि त्वं कुर्याः पशूनां परिपालनं च।
वामाङ्गमायामि तदा त्वदीयं जगाद्कन्या वचनं तृतीयम्।।

इत्यादि प्रतिज्ञायां कृतायां तत्स्वीकारार्थं वरो वदेत् –

मदीयचित्तानुगतं च चित्तं सदा मदाज्ञापरिपालनञ्च।
पतिव्रता धर्मपरायणा त्वं कुर्याः सदा सर्वमिमं प्रयत्नम्।।

इत्थं परस्परं कृतायां प्रतिज्ञायां "ॐ वाममुद्य सवितर्व्यामिश्वो" इत्यादि मन्त्रं पठन् वरो वधू–सीमन्ते सिन्दूरं दद्यात्। तदनन्तरं अन्यदपि माङ्गलिक कृत्ये कृते सति उद्वाह संस्कारः समाप्यते।

एतत् सर्व इहलोके परलोके च निःश्रेयसलाभपर्यन्तं उद्वाहसंस्कारस्य परमपवित्रतामयं निगूढं रहस्यमस्ति। यस्योपरि सामान्यचिन्तनेनैव विचारवन्तः पुरुषा अवगन्तुमर्हन्ति यत् आर्य्यजातीयविवाहविधिना सहान्यजातीयविवाहविधेः कियंदन्तरमस्तीति तथा के महल्लक्ष्यमग्रे निधाय पूज्यपादमहर्षिभिर्विवाहविधेः प्रवर्तनं कृतमिति।

स्मृतिकारै ब्राह्म–दैव–आर्ष–प्राजापत्य–आसुर–गान्धर्व–राक्षस–पैशाचादिभिः विवाहोऽष्टधा निरुपिस्तथा पूर्वविवाहचतुष्टयस्य प्रशंसाऽपरविवाहचतुष्ट्यस्य निन्दा कृता।

१. ब्राह्मविवाहे वरमाहूय वस्त्राऽलङ्कारभूषिता कन्या तस्मै दीयते।

२. दैवविवाहे ऋत्विजे कन्यादानं क्रियते।

३. आर्षविवाहे वरपक्षतो गोद्वयं नीत्वा कन्यादानं क्रियते।

४. आसुरविवाहे धनं नीत्वा कन्या दीयते।

५. गान्धर्वविवाहे परस्परप्रणयेन विवाहो भवति।

६. राक्षसविवाहे हननाघातादिभिः कन्या गृह्यते।

भगवान् श्रीकृष्णोऽम्बिकादर्शनार्थं समागतां रुक्मिणीं राक्षसविधिना समीक्षतां द्विषतां जहार।[1]

---

१. तां राजकन्यां रथमारूरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम्।
रथं समारोप्य सुपर्णलक्षणं स राज्यचक्रं परिभूय माधवः।
ततो ययौ रामपुरोगमैः शनैः सृगालमध्यादिव भागहृद्धरिः।।
तं मानिनः स्वाभिभवं यशःक्षयं परे जरासंधवशान सेहिरे।
अहो धिगस्मान् यश आत्तधन्वनां गोपैर्हृतं केसरिणां मृगैरिव।।
— श्रीमद्भागवते दशमस्कन्धे ५३ अध्याये, श्लोक ५५–५६।

श्री शुक उवाचः —
इति सर्वे सुसंरब्धा वाहानारूह्य दंशिताः। स्वैः स्वैर्वलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः।।
तामापतत आलोक्य यादवानीक यूथपाः। तस्थुस्तत्सम्मुखाराजन् विस्फूर्ज्य स्वधनूंषिते।।
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः। मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा।।
पत्युर्वलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा। सव्रीडमैक्षत्तद्वक्त्रं भयविह्वलोचना।।
प्रहस्य भगवानाह मा स्म भैर्वामलोचनो। विनङ्क्षत्यधुनैवैतत्तावकैः शात्रवं बलम्।।
तेषां तद् विक्रमं वीरा गदसंकर्षणादयः। अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान्।।
पेतुः शिरांसि रथिनामश्विनां यजिनां भुवि। सकुण्डल किरीटानि सोष्णीषाणि च कोटिशः।।
हस्ता सासिगदेष्वासाः करभा ऊरवोङ्घ्रयः। अश्वांश्वतरनागोष्ट्रखरमर्त्य शिरांसि च।।
हन्यमानवलानीका वृष्णिभिर्जयकाङ्क्षिभिः। राजानो विमुखा जग्मुर्जरासंधपुरःसराः।।
शिशुपालं समभ्येत्य हृतदारमिवातुरम्। नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन्।।
भो भोः पुरुषशार्दूल! दौर्मनस्यमिदंत्यज। न प्रियाप्रिययो राजन् निष्ठादेहिषु दृश्यते।।
यथा दारूमयी योषिन्नृत्यते कुहकेच्छया। एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः।।
शौरेःसप्तदशाहं वै संयुमानि पराजितः। त्रयोविंशतिभिःसैन्यैर्जिग्य एकमहं परम्।।
तथाऽप्यहं न शोचामि न प्रहिष्यामि कर्हिचित्। कालेन दैवयुक्तेन जानन् विद्रावितं जगत्।।
अधुनाऽपि वयं सर्वे वीरयूथपयूथपाः। पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः।।
रिपवो जिग्युरधुना काल आत्मानुसारिणि। तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः।।
....अपरपृष्टेऽप्यवलोकनीयम्

साम्प्रतं कालप्रभावादन्यसमस्तविवाहप्रथा नाशंगता:, केवलं ब्राह्मविवाहस्य रीतिरेव प्रचालिताऽवलोक्यते, कुत्रचिदासुरविवाहस्य प्रथायां विद्यमानायामपि तत् प्रशंसा न भूत्वा निन्दैव भवति। ऋषिभिरासुरविवाहस्य बहुशो निन्दा कृता। यथा –

---

एवं प्रबोधितोमित्रैश्चैद्योऽगात् सानुग:पुरम्। हतशेषा: पुनस्तेऽपि ययु: स्वं स्वं पुरं नृपा:।।
रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसु:। पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो वली।।
रुक्म्यमर्षी सुसंरब्ध: शृण्वतां सर्वभू भुजाम्। प्रतिजज्ञे महावाहुर्दंशित: सशरासन:।।
अहत्वा समरेकृष्णमप्रत्यूह्य च रुक्मिणीम्। कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमिव:।।
इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वर:। चोदयाश्वान् यत: कृष्णस्तस्य मे संयुगं भवेत्।।
अद्याऽहं निशितैर्वाणैर्गोपालस्य सुदुर्मते:। नेष्ये वीर्यमदं येन स्वसा मे प्रसमंहृता।।
विकत्थमान: कुमतिरीश्वरस्याप्रमाणवित्। रथेनैकेन गोविन्दं तिष्ठ तिष्ठेत्य थाह्वयत्।।
धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभि:शरै:। आह चात्र क्षणं तिष्ठ यदूनां कुल पांसन्!।।
कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्ष बद्धवि:। हरिष्येऽद्य मदं मन्द मायिन: कूटयोधिन:।।
यावन्न मे हतो बाणै: शर्याथा मुञ्च दारिकाम्। स्मयन् कृष्णो धनुश्छित्वा षड्भिर्विव्याध रुक्मिणम्।।
अष्टाभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभि:। स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभि:।।
तैस्ताडित: शरौधैस्तु चिच्छेद धनुरच्युत:। पुनरन्यदुपादत्त तदप्यच्छिनदव्यय:।।
परिघं पट्टिशंशूलं चर्मासी शक्तितोमरौ। यद् यदायुधमादत्त तत् सर्वं सोऽच्छि नद्धरि:।।
ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया। कृष्णमभ्यद्रवत् क्रुद्ध: पतङ्ग इव पावकम्।।
तस्य चापतत: खड्गं तिलशश्चर्म चेषुभि:। छित्वासिमुपाददेतिग्मं रुक्मिणं हन्तुमुद्यत:।।
दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणीभयविह्वला। पतित्वा पादयोर्भर्तुरुवाच करुणं सती।।
योगेश्वराप्रमेयात्मन्! देवदेव! जगत्पते!। हन्तुं नार्हसि कल्याण! भ्रातरं मे महाभुज!।।

श्रीशुक उवाच –

तया परित्रास विकम्पिताङ्ग्या शुचावशुष्यन्मुखरुद्धकण्ठया।
कातर्य विस्रंसितहेममालया गृहीतपाद: करुणोन्यवर्तत्।।
चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपत् व्यरूपयत्।
तावन्ममर्दु: परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजा:।।
तावन्ममर्दु: परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजा:।। (१०२)
कृष्णान्तिक्रमुपव्रज्य ददृशुतत्र रुक्मिणम्। तथाभूतं तत् प्रायं दृष्ट्वा संकर्षणो विभु:।।
विमुच्य वद्धं करुणो भगवान् कृष्णमब्रवीत्।। '
असाध्विदं त्वया कृष्ण! कृतमसज्जुगुप्सितम्। वपनंश्मश्रुकेशानां वैरूप्यं सुहृदो वध:।।
मैवास्मान् साध्व्यसूयेथा भ्रातुर्वैरुप्यचिन्तया।सुखदु:खदो न चान्योऽस्ति यत: स्वकृतभुक् पुमान्।।
वन्धुर्वधार्हदोषोऽपि न वन्धोर्वधमर्हति। त्याज्या स्वेनैव दोषेण हत: किं हन्यते पुन:।।
क्षत्रियाणामयं धर्म:प्रजापतिविनिर्मित:। भ्राताऽपि भ्रातरं हन्यात् येन घोरतरस्तत:।।
राज्यस्य भूमेर्वित्तस्य स्त्रियोमानस्य तेजस:। मानिनोऽन्यस्य वा हेतो: श्रीमदान्धा: क्षिपन्ति हि।।
तवेयं विषमा वुद्धि: सर्वभूतेषु दुर्हदाम्। यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत्।।
आत्ममोहो नृणामेष कल्प्यते देवमायया। सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम्।।

....अपरपृष्ठेऽप्यवलोकनीयम

मूल्यं दत्वा या स्त्री आनीयते सा पत्नीति वक्तुं न शकयते। तद्वारा दैवपितृ कार्यादिकं किमपि भवितुं न शक्यते। तां विद्वांस पत्नीति नोक्त्वा दासीति वदन्ति।[1] अन्यच्च –

एक एव परो ह्यात्मा सर्वेषामपिदेहिनाम्। नानेव गृह्यते मूढैर्यथा व्योतिर्यथा नभः।।
देह आद्यान्तवानेष द्रव्यप्राण गुणात्मकः। आत्मन्यविधया क्लृप्तः संसारयति देहिनम्।।
आत्मनोऽन्येन संयोगो वियोगश्चाक्षतः सति। तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रुपाभ्यां यथा रवेः।।
जन्माद्यस्तु देहस्य विक्रियानात्मनः क्वचित्! कलानामिव नैवोन्दोर्मृतिर्ह्यस्य कुहूरिव।।
यथा शयान आत्मानं विषयान् फलमेव च। अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यवुधोभवम्।।
तस्मादज्ञानजं शोकमात्मशोषविमोहनम्। तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते।।

श्री शुक उवाच –

एवं भगवतातन्वी रामेण प्रतिबोधिता। वैमनस्यं परित्यज्यमनो बुद्ध्या समादधे।।
प्राणावशेष उत्सृष्टो द्विड्भिर्हतवल्लभः। स्मरन् विरूपकरणं वितथात्ममनोरथः।।
चक्रे भोजकटं नाम निवासाय महत् पुरम्। अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीसीम्।।
कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा।
भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान्।
पुरमानीय विधिवदुपयेमे कुरुद्वह!।।
तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप।।
नरानार्य्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः।
पारिवर्हमुपाजकुर्वरयोश्चित्रवाससोः।।
सा वृष्णिपुर्युत्तभितेन्द्रके तुभिर्विचित्र माल्याम्बररत्न तोरणैः।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधूपदीपकैः।।
सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम्।
गजैर्द्वास्सु परामृष्टरम्भापूगोपशोभिताः।।
कुरुसृञ्जायकैकेयविदर्भ यदुकुन्तयः।
मिथो मुमुदिरे तस्मिन् सम्भ्रमात् परिधावताम्।।
रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः।
राजानो राजकन्याश्च बभूवुर्भृश विस्मिताः।।
द्वारकायामभूद् राजन् महाभोदः पुरौकसाम्।
रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम्।।
– श्रीमद्भागवते दशमस्कन्धे, ५४ अध्याये, श्लो. १–६०।

१. क्रयक्रीतस्तुयानारी न सा पत्न्यभिधीयते। नसा दैवे न सा पित्र्ये दासीतां कवयो विदुः।।
– कश्यपस्मृतिः।

कन्याविक्रेतार: प्रच्छन्नपापकारिणो मूर्खाश्च भवन्ति ते स्वत: करालेनरके पतन्ति आसप्तमंनैजं कुलञ्च पातयन्ति।[१] इत्थमार्य्यशास्त्रेषु आसुरविवाहस्यभूरिनिन्दाकृताविद्यते। राक्षसपैशाचविवाहयोर्निन्दा शास्त्रेष्वस्त्येव। किन्त्वेतावति सत्यपि "नायावो विद्यते सत:" इति नियमानुसारं वस्तुसत्ताया नाशो न भूत्वा केवलं रूपान्तरमात्रं भवति। गोणरुपेण ब्राह्मविवाहाऽभ्यन्तेरेपि देशाचार–लोकाचारादिपरम्परयाऽन्यसमस्तविवाहानामपि कानि–चिल्लक्षणान्यवलोक्यन्ते। सम्प्रति विवाहसमये ऋत्विकवत् वरपूजाया या प्रथा प्रचलिता विद्यते तद् ब्राह्मविवाहे दैवविवाहस्यान्तर्निवेशो वक्तुं शक्यते। ब्राह्मविवाहस्यार्हणभागे विवाहस्थले एका गौर्वन्धनस्याज्ञा वर्तते तदार्षविवाहस्यान्तर्निवेशो ज्ञातव्य:। तद्वत् स्थूलोपहासो गालीप्रदानं प्रस्तरप्रक्षेपादि रीतिराक्षसविवाहस्य कङ्कालमात्रमस्ति। शुभदृष्टि: स्त्री–आचार–वासर जागरण–आमोद–प्रमोदादि गान्धर्वविवाहस्य लक्षणमस्ति। पितृपक्षतो कन्यार्थं आभूषणादिग्रहणं तथा वरार्थं तिलकादिग्रहणमासुरविवाहस्य लक्षणमस्ति। इत्यादिरुपेण येन केनापिप्रकारेण अष्टविवाहविधयोऽनुष्ठिता भवन्ति। तेषु ब्राह्मविवाहविधि: सर्वोत्तमो वर्तते।

सम्प्रति विवाहसंस्कारस्यापूर्वरहस्योद्घाटनं क्रियते। यथा – अस्योद्वाहसंस्कारस्य प्रभावेणैव आर्य्यैं द्वितीयाश्रमे सर्वाभ्यर्हिते प्रवेशाधिकारोऽधिगम्यते। ते हि देवसाहाय्यमुपलभ्य शास्त्रोक्तविधिना अन्योन्याव्यभिचाररुपप्रतिज्ञाबद्धा भूत्वा सहधर्मिणीसमेता गृहस्थाश्रमेऽत्र प्रविशन्ति।

यद्यपि बाह्मदृष्ट्याऽऽर्य्याणां दारसमादानरुपा संस्कारोऽयं प्रवृत्तिमार्गसमेधक: प्रतिभाति: तथापि वर्णाश्रमधर्ममर्य्यादा विज्ञानपरिशीलनेन आर्य्याणां स्त्रीपरिणयात्मकोऽयं संस्कारो निवृत्तिसमर्थक एव प्रतीयते। यतोहि वर्णाश्रमधर्मविज्ञानत: पुमान् नारीदुर्गाश्रयेणात्मानं गोपापयन् दुर्दम्यानामिन्द्रियाणामाधिपत्यमाचरन् शास्त्रीयस्वीयप्रवृत्तिबलेन निवृत्तिमार्गमेव पुष्णाति। आर्य्याणां प्रवृत्तिपद्धतिर्यथा यथा पर्य्यालोच्यते तथा तथा सोत्तरोत्तरं निवृत्तिपोषिकैवोपलभ्येत।

१. *कन्याविक्रयिणोमूर्खा रह: किल्विषकारिण:। पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम्। –मनुस्मृति:।*

ननु सृष्टिक्रियायाः प्रवृत्तिमूलकत्वात् कथं सृष्टिवर्द्धकस्तथापि विवाहसंस्कारस्य निवृत्तिमूलकत्वमिति चेदुच्यते — वर्णाश्रममर्य्यादाश्रितानामार्य्याणां सृष्टिक्रिया न कामार्थमूलिका, किन्तु धर्ममोक्षमूलकतया तस्या निवृत्तिपोषकत्वे न काप्यनुपपत्तिः। आर्य्या हि योग्यसन्तत्यु- त्पादनेन तद्रक्षया च पितृदेवर्षीणामृणानि ऐहलौकिकं भूतर्णं मानवर्णञ्चापाकृत्य स्वनिवृत्तिमार्गं परिष्कुर्वन्ति।

दैवसूक्ष्मजगतां देवर्षिपितर इति त्रयः सञ्चालकाः सन्ति। तेषां नियमतः संवर्द्धनायेह मृत्युलोके योग्यसन्ततिसमुत्पादनस्य तद्रक्षणस्य चाऽवश्यकताऽपेक्षिता। अपरञ्च भूतानां मनुष्यमात्राणाञ्च कर्त्तव्येन प्राप्तानामुपकाराणां प्रत्युपकारस्याप्यावश्यकतेत्येवं पञ्चानामप्येषा- मृणानामुद्धाराय धार्मिक्या योग्यायाः सन्ततेः समुत्पादनं तद्रक्षणाञ्च न कदापि प्रवृत्तिमूलकं सम्भवति भावप्राधान्यान्निवृत्तिप्रवृत्तिमार्गयोः।

ननु प्रजातन्तुविच्छेदस्य पापाधायकत्वात् सर्वेषां गृहस्थाश्रमे प्रवेशस्याऽवश्यकत्वात् ब्रह्मचारिणो गार्हस्थ्यं विहाय संन्यासाश्रमप्रवेशः कथन्न विगर्हित इति शङ्काया उत्तरमाह यावदेषु पञ्चस्वपि ऋणेषु ब्रह्मचारिणः कर्त्तव्यबुद्ध्याऽऽसक्तिर्विद्यते तावत्तु ब्रह्मचर्यतः समावृत्य गार्हस्थ्यप्रवेश एव साधीयान्। एवं सति दारग्रहणात्मकस्योद्वाहसंस्कारस्याननुष्ठानं दोषावहमेव। यदि च पूर्वजन्मनिसमुपार्जितसुकृतां वलेन योग्याधिकारी ब्रह्मचारी विषमवैराग्यमात्मज्ञानञ्च समधिगम्यानादिवासनाक्षयेन प्रसन्नचेता ब्रह्मविचारक्षमः सम्पन्नस्तस्य तु नास्त्येवेहाश्रमे प्रवेशप्रयोजनम्, स तु तस्मादेव ब्रह्मचर्य्यात्संन्यासाश्रमाश्रमणाधिकारी इति सर्वतन्त्रसिद्धान्तो वर्तते। श्रुतिरपिः —

"ब्रह्मचारी भूत्वा गृही भवेत् बली भवेत् बली भूत्वा प्रव्रजेद् यदि वेतरथा ब्रह्मचर्य्यदिव प्रव्रजेत् गृहाद्वावनाद्वा" इति अपरञ्च "यदहरेव विरज्येत्तदहरेव प्रव्रजेद्" इति।
"

स्मृतिश्चात्र –

प्रव्रजेद् ब्रह्मचर्य्याद्वा प्रव्रजेद्वा गृहादपि।
वनाद्वा प्रव्रजेद् धीमानातुरो वाऽथ दुःखितः।।

## (२) शिक्षा

पुराण–रामायण–महाभारत–तन्त्रशास्त्राणिविश्वकोशकार्यं कुर्वन्ति। अद्यत्वेऽस्माक–मुत्तरोत्तरमवनतेः कारणं सुशिक्षाया अभावोऽस्ति। शिक्षाया उद्देश्यं न केवलमुदरपूर्तिरिव मन्यते। अतोऽस्माकं धार्मिक–आर्थिक–सामाजिक–नैतिक–शारीरिक–मानसिक–वाचनिका–ऽऽध्यात्मिको ह्रासः शनैः शनैः वर्द्धते। कस्यापि देशस्य धर्मस्य जातेश्चोन्नतिमूलकारणं तत्रत्या शिक्षैवास्ते। अत आलोचकानां मतमस्ति, यत् कस्यापि देशस्य जातेश्च धार्मिक–सामाजिक–आर्थिक समुन्नतिः द्रष्टुमिष्टा स्यात्तर्हि तदीयशिक्षाप्रणाल्या निरीक्षणं कर्त्तव्यम्। बालका एव देशस्य धर्मस्य जातेश्च सन्ति विभूतयः। तेषां यादृशं चरित्रं सञ्चितं भविष्यति तादृशमेव देशस्य धर्मस्य जातेश्च भविष्यमपि सञ्चितं भविष्यति। अतो वालकानां चरित्र सञ्चये विशेषतो ध्यानं प्रदाय तेभ्यो धार्मिकशिक्षाप्रदानस्य महत्यावश्यकताऽस्ति। यवनखीष्ट्रीयबालकानांकृते तु तत्संस्थास्थापितेषु शिक्षालयेषु प्रवर्तते तदीयधार्मिकशिक्षाप्रदानस्य व्यवस्था, किन्तु हिन्दुवालकानांकृते धर्मनिरपेक्षसर्वकारद्वारा सञ्चालितेषु शिक्षालयेषु धार्मिकशिक्षाप्रदानस्य वार्ता तु दूरे तिष्ठतु धार्मिकग्रन्थानां नामापि न वालकैर्ज्ञायते। परिणामेऽस्माकं बालका ध्रुव–प्रह्लाद–लव–कुश–भरत–अभिमन्युप्रभृतीनां वीरबालकानां स्वप्नमपि न पश्यन्ति। इदं हिन्दूजातेः ह्रासस्य न कारणं तर्हि किं सम्भवेत्?

भारतीयशिक्षाया उद्देश्यं न केवलं धनोपार्जनमेवास्ति प्रत्युत् धर्मार्थकामानां समानतया सेवनमनिवार्यं विद्यते। अर्थात् त्रयाणां धर्मार्थकामानां समानरुपेण समादरो विधेयः। यो हि त्रिष्वेतेषु कस्मिंश्चिदेकस्मिन् व्यासज्जते स निकृष्टकोटिकः पुरुषो निगद्यते। यो द्वयोर्निरतो भवति, सोऽस्ति मध्यमकोटिको नरः। यश्च त्रिषु समानरुपेण प्रवर्तते स उत्तमकोटिको

मानवो गण्यते।[1] एवं भारतीया धर्मदर्शनाभ्यां सहैव जीवनस्य भौतिकेष्वङ्गेषु अपि पर्याप्तां रुचिं दधतेऽस्म, तेषां पुरुषार्थेषु धर्ममोक्षातिरिक्तावर्थकामावप्यास्ताम्, याभ्यां जीवनस्य प्रवृत्तिमार्गे उचितं स्थानं प्राप्तमासीत्। या हि धर्मप्राणा हिन्दुजातिरन्यजातिषु शिरोमणिः, मानवमणिः, आदिगुरुः, शिक्षिका, पथप्रदर्शिका चासीत्। अद्यत्वे तस्या एव बालका धर्महीना अन्यानुकरण–कुशला विस्मृतपूर्वजपुरुषार्था उच्छृं खलाचाराश्च भवन्ति निरन्तमित्यहो दौर्भाग्यम्।

यदि हिन्दुभिर्निजवालकेभ्यः पूर्ववर्तिनां स्वनिर्भीकबालकानां कथानकमुपदिष्टं स्यात्तर्हि नैवं दशा सम्भवेत्। अद्यत्वे धार्मिकशिक्षाया अभावस्य परिणामो जायते, यदाधुनिकानां बालकानां हृदयपटलेषु हिन्दुसंस्कृते रुपरेखा न विकशिता भवति, येन ते स्वपूर्वजानां गौरवमनुकरणीयमादर्शञ्च च सर्वथा विस्मृत्यानेकार्थकरणे प्रवृत्ता भवन्ति, प्राचीनस्य भारतस्य नेषदपि अभिमानं तेषु भवति। न ते जानन्ति यदस्माकं धर्म–साहित्य–पूर्वपुरुषाणां वास्तविकं स्वरुपं कीदृगासीत्, किञ्चास्ति कर्त्तव्यमस्माकम्।

तात्पर्यमिदमस्ति यद् बाल्यावस्थायां धार्मिकशिक्षाया अभावादद्यतनीयाः अस्माकं वालका हिन्दुधर्म–साहित्य–सभ्यता–संस्कृति–सामाजिक विषयाणां किमपि न जानन्ति, किन्तु पाश्चात्य धर्म–रीति–नीति–व्यवहारादिविषयेऽप्यधिकाः प्रवीणा जायन्ते। यस्य परिणामेऽस्माकं वैदिकधर्म–सदाचार–भारतीयनीति–राति–विचार–व्यवहारादयो बालकानां हृदयेभ्य उत्तरोत्तरं निःसरन्ति प्रविशन्ति च, वैदेशिका आचार–विचार–व्यवहारादयः। अद्यत्वेऽस्माकं बालकाः स्वकीय स्वरूप–भाषा–भावादिग्रहणे संकुचन्ति, किन्तु विदेशीय भावना–भाषा–आचार–विचार–व्यवहारादीनामनुकरणे स्वकीयं गौरवमनुभवन्ति। यत्रास्माकं शिक्षाया आदर्शः "महाजनो येन गतः स पन्था" इत्यासीत् तत्राद्यतनीया बालकाः स्वपूर्वजान् आरण्यकानसभ्यान् सङ्कीर्णविचाराननुदारांश्च मन्यन्ते।

---

१. *धर्मार्थकामाः सममेव सेव्या यो ह्येकसेव्यः स नरो जघन्यः।*
*द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो यो निरत स्त्रिवर्गे।।*

इतिहासनाम्नाऽस्माकं बालका यत् शिक्ष्यन्ते, किं तदेवास्ति वास्तविकं इतिहास:? अद्यतनीये इतिहासे तु बालका: शिक्ष्यन्ते यत् हिन्दुसभ्यता साहित्यं चार्वाचीने स्त:। हिन्दुपूर्वजा मध्य एशियातो भारतमाक्रम्यात्रत्यानामादिनिवासिनामार्याणां सर्वस्वं लुण्ठितवन्तस्तथा तान् दूरे दक्षिणेऽपसारयन्। हिन्दवो भारतस्यादिनिवासिनो न सन्ति, किन्तु तेऽपि आंग्लजातिवद बाह्यप्रदेशादागता:। किं सर्वविधज्ञानभण्डाराणां भारतीयेतिहास स्रोतसां वेदानां पुराणानामस्मत्पूर्वजानां च विषये असत्य–निर्मूल–भ्रमोत्पादिका–चर्चैवास्ति इतिहास:? नहि, कदापि नैतद् सम्भवति। कथनस्येदमस्तितातपर्यं यद् या जाति: स्वान् धर्मग्रन्थान् आत्मन: पूर्वजांश्च विस्मरति, तान् प्रति दोषदृष्टिं वा कुरुते, सा न स्थायिनी समुन्नतिं कर्तुं प्रभवति। अद्यतनशिक्षाया: प्रभावेण भारतीयानामियमेवास्ति दशा। पाश्चात्येन विचारकेण विदुषा मैक्समूलरेण सत्यमुक्तमस्ति।

या जाति: स्वकीयेन प्राचीनेन गौरवेण, इतिहासेन, साहित्येन च नात्मानं गौरवान्वितं मनुते, सा स्वजातीयजीवनस्य प्रधानमाश्रयं समूलमुन्मूलयति।

वस्तुतोऽद्यत्वे शिक्षापद्धतावनेके दोषा: समागता: सन्ति। अनुशासनहीनता दैवन्दिनं वर्द्धते। गुरुशिष्यसद्भावो दूरतरं गच्छति, कक्षाबहिष्कारोऽहरह: क्रियते, कलहाग्निर्देदीप्यते, सङ्घर्षस्फुलिङ्गा: सर्वत: प्रसरन्ति, अभिभावकानां गुरुणामन्तेवसतां चैकमात्रं ध्येययमुपस्थितमस्ति यत् बालका: परीक्षासु येन केनापि प्रकारेणावश्यमुत्तीर्णा: स्यु:। परीक्षाकेन्द्रेषु अवैधाश्रयणम्, परीक्षकाणां भर्त्सनम्, अनुचितेन विधिनाऽङ्कप्राप्तिप्रयास: समेषां लक्ष्यं जातमस्ति। प्रश्न काठिन्ये कोलाहलकरणं परीक्षाभवनत्याग: कर्त्तव्यत्वेनोपस्थित:, केन्द्रव्यवस्थापकानां हत्याया, निरीक्षकेष्वाघातस्य कुचेष्टा क्रियन्ते, कुलपतेर्विश्वविद्यालये प्रवेश: कठिनो जात:, कार्यालयस्य कार्यस्थगितीकरणमारब्धम्। तत्राऽग्निप्रज्वालनं वस्तूनां त्रोटनं भेदनञ्च प्राय: सर्वत्रैव वोभवीति। यत्रेदृश: शिक्षाया: कुपरिणामो दृश्यते, तत्र का सदाशा क्रियेत्। अतो वर्तमानशिक्षापद्धतौ आमूलं परिवर्तनमनिवार्यतया नितान्तमावश्यकं प्रतीयते। भारत हितेच्छुभि: समस्तै: शिक्षाविद्भि:

सम्भूय भाविन्याः सन्ततेर्वास्तविकविकाशशीलप्रवृत्तये सुशिक्षायाः प्रयासोऽवश्यं विधेयः। "यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्" इति हितोपदेशवचनानुसारं वाल्ये या शिक्षा दीयते, तस्या एव संस्कारो दृढ़तरो जायते, जीवनपर्यन्तं च तया लाभो भवति। अतो हि सुकोमलमतिभ्यो बालकेभ्यः किञ्चित्तदुपयोगिनीं पौराणिकीं शिक्षामवश्यं प्रदातुं प्रयतनीयम्। यया सुशिक्षया ते धर्म—देश—जातीनां समुन्नतये प्रयत्नशीलाः सन्तः सुखमयं जीवनं निर्मातुं शक्नुयुः। अतस्तैः स्वप्राचीनेतिहासस्य परम्पराया वा ज्ञानमवश्यं कर्त्तव्यम्, येन भारतीयसभ्यतायाः संस्कृतेश्च पूर्णज्ञानवन्तोऽस्माकं बालका समाजस्य पथप्रदर्शकाः सन्तः स्वदेश—धर्म—जातीनां सत् सेवका राष्ट्रहितेच्छवो वा भवेयुः, तथा स्वतन्त्रस्य भारतस्य गौरवरक्षणेन सह स्वं भविष्यं नूनं समुज्ज्वलमादर्शमयं च विदध्युः।

भारतीयशिक्षाया उद्देश्यं न केवलं धनोपार्जनमात्रमेवेति पूर्वमेवोक्तं प्रत्युताऽऽर्य्यजातिषु मनुष्याणां गमनामनचक्रीयक्रमोन्नतेभावे देवानां साहाय्याभावो हेतुः। दैवसाहाय्यबलेनैव क्रमोन्नतिर्भवतीति सुनिश्चितमेतत्। यतो हि देवा एव कर्मफलदातारस्तत्सहायकाश्च निगद्यन्ते। तेषां कृपोपलब्धिश्च संस्कारशुद्धिमूलकक्रियाशुद्धिजन्यपुण्यसञ्चयेनैव भवति। मनुष्याणां सर्वे संस्काराऽन्तःकरणशुद्ध्यर्थमेव भवन्ति। एभिः सम्पादितैः षोडशसंस्कारैर्दैवजगतां सम्बन्ध उपस्थाप्यते देवानां सहायकत्वंबलञ्चोपलभ्यत इति। एवमेव क्रमशः कोशानां विकाशो जायते —

यथा च स्वेदजश्रेणिगता जीवाः स्वप्रकृतिपरवशा विचित्रालौकिकप्राणक्रियासमूहं प्रकाशयन्ति। तथैवेमेऽपि अण्डज श्रेणिगा जीवा निजप्रकृतिपरतन्त्रा मानसिकीनां क्रियाणा— मलौकिकमसाधारणं चमत्कारं दर्शयन्ति। तथाहि रथाङ्गनाम्नोरद्वितीया प्रेम, प्रवृत्तिः, सर्पजातेरतुलनीयं स्वपुत्रादनात्मकं खलत्वं, प्रतिहिंसावृत्तिश्च। कपोतानां स्ववास— स्थानाऽत्यासक्ति रित्यादीनि मनोमयकोशाऽभिव्यक्तेर्जागरुकतराण्युदाहरणानि निभालनीयानि।

अधुना ज़रायुजयोनिषु कोशसंख्याविकाशमाह: –

"चतुष्कोशविकाशो जरायुजे[1]"

सहजाद्वितीय स्वाभाविकसंस्कारवलेन क्रमश: क्रमाभिव्यक्तिमासादयज्जीवो यदाण्डजकोटियोनितो जरायुजश्रेण्यां प्रविशति। तदा तत्रान्नमय–प्राणमय–मनोमय–विज्ञानमयानां चतुर्ण्णामपि कोशानां विकाशो भवति।

तदेव प्रमाणयति –

"तत्राल्पविकाशो बुद्धे:[2]"

यथाण्डजश्रेणीषु जीवेषु मनोधर्मप्रोद्भूत्या त्रयाणां कोशानां विकाशस्य प्रमाणमुपलभ्यते, तथैवेहापि जरायुज श्रेणिगेषु जीवेषु बुद्धिधर्मोपलब्ध्या चतुर्ण्णां कोशानां विकाश–प्रमाणमासाद्यते। तत्राश्वहस्तिप्रभृति जरायुजजीवेषु बुद्धिकृत्यं स्पष्टत एव प्रकाशत इति नास्ति बहु–विवृतेरावश्यकत्वम्।

इदानीं पूर्णावयवात्मिकाम्मनुष्ययोनिं वर्णयति –

"हास्यलक्षण: पञ्चकोशविकाशो मानवे[3]"

मानवे मनुष्ययोनिगे जीवे हास्यं लक्षणं चिह्नं स तथोक्त: पञ्चानां कोशानां विकाशेन ज्ञेय:। मानवे कोशपञ्चकस्यापि विकाशो भवति। यतस्तत्र अन्तिमस्यानन्दमयकोशस्य कार्यं हासात्मकं समुपलभ्यत इति सूत्रार्थ:।

दैवराज्यसञ्चालका देवगणा: क्रमशो जीवान् योनितोयोन्यन्तरं प्रापयन्त: स्वाभाविक–संस्कारवशतोऽग्रे सम्वर्द्धयन्तो मानवयोनिं प्रापयन्ति। तत्र च मनुष्ययोनावुपेत्य जीव: पञ्चभिरपि कोशै: परिपूर्णो भूत्वा स्वाधीनो भवति। यतो हि मानवयोनाविह अन्नमय–प्राणमय–

---

१. कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८५।

२. कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८६।

३. कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८७।

मनोमय–विज्ञानमय–आनन्दमयानां पञ्चानामपि कोशानां विकाशो भवति। आनन्दस्य हास्यं लक्षणे तच्च मनुष्ययोनावेन स्फुटं परिलक्ष्यते। इत्यत आनन्दमयानांकोशानां मानवयोनौ विकाशो भवतीति सिद्ध्यति। यद्यपि मनुष्येतरप्राणिनामप्यानन्दानुभवो भवत्येव। ते च स्वलाङ्गूलचालनोत्पन्नवादिभिः स्वानन्दानुभवं प्रकाशयन्त्यपि, तथापि तेषु प्राणिषु केषुचिदपि हास्यस्य लक्षणन्न परिलक्ष्यते, इति मानवयोनावेव पञ्चानामपि कोशानां पूर्णविकाशो भवतीति सर्वसम्मतो मार्गः।

प्रसङ्गत आनन्दमयकोशस्य पूर्णतारहस्यं प्रतिपादयति –

"आनन्दमयस्य पूर्णकलौपयिकत्वं चन्द्रवत्[१]"

मानवयोनितः प्राक्तनावस्थायां जीवोऽस्वाधीनः प्रकृतिपराधीनोऽग्रे संसरन् क्रमाभिव्यक्त्या नियमत एवेह मानवयोनौ समुपतिष्ठते, इति पूर्वमेव विस्तरशः प्रकटीकृतम्। चरमस्याऽनन्द–मयस्य कोशस्याभिव्यक्तिरिह मानवयोनौ स्वत एव भवति। परन्तु आनन्दमयकोशेन सहात्मनः साक्षात्सम्बन्धभागित्वात् तस्य क्रमशः सम्यग् विकाशो जन्मजन्मान्तरेण कलाविकाशसाहाय्येन चन्द्रवज्ज्ञेयः। यथा चन्द्रः प्रतिपदाया आरभ्य क्रमशोऽभिवर्द्धमानः पूर्णिमायां पूर्णकलो भवति। तथैव जीवो मानवयोनौ शुभानां जैवसंस्काराणां साहाय्येन उत्तरोत्तरमाध्यात्मिकभूमावग्रे समेधमानो जन्म–जन्मान्तरेण क्रमशः आनन्दमयकोशं परिष्कुर्वन् आनन्दकलां सम्बर्द्ध्य–मोक्षपदमासादयति।

तस्य चरममुदर्कमभिधत्ते –

"कलाविकाशतः कैवल्यम्[२]"

जीवानामानन्दमयकोशो यावतीम्पूर्णतामासादयति तावदेव स पुष्पवद् विकाश–मासादयति। यावन्तमेव स पोषमासादयति तावत्येव तस्मिन् ब्रह्मानन्दसत्ता प्रकाशते। ब्रह्मानन्दस्य पूर्णसत्तानुभव एव तु कैवल्यं मुक्तिर्वोच्यते।

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८७।*
२. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८९।*

जीवेषु पूर्वोक्तसंस्कारशुद्धिसाहाय्यत: यावदेव चिद्विलासरूपं ज्ञानं क्रमश: समेधते तावदेव ते वाहुल्येन ब्रह्मानन्दानुभूतिमश्नुवते। विषयानन्दानुभवोऽपि ज्ञानिनोऽज्ञानिकृतानुभवतो विलक्षण एव भवतीति स्वीकारणीयमेव। एवमेव ज्ञानवृद्ध्या सह विषयानुभवेऽपि वैलक्षण्यं समेधते। इत्येवमन्ते स्वाभाविकस्याऽद्वितीयस्य संस्कारस्य क्रमविकाशेन सार्धमानन्दमयकोश: पूर्णतामधिगच्छति। तस्मिंश्च पूर्णताजुषि स्फुटं विकासमुपगते सति जीव: सच्चिदानन्दमयस्य स्वस्वरूपस्योपलब्ध्या मुक्तो भूत्वा नन्दति जीव:। अत एवोक्तं "सा विद्या या विमुक्तये" इति।

## (3) ब्रह्मचारिणो नियमा:

ब्रह्मचारी गुरुकुले वसन् जितेन्द्रिय: सततं गुरोर्हितमाचरन् दासवद् विनम्र: गुरौ सुदृढसौहृद:, मौनीभूय सावधान: सन् उभे सन्ध्ये मध्याह्न सन्ध्यां च गायत्रीं जपन् सायं प्रात: गुरु:—अग्नि—विष्णु—शिवादीन् उपासीत्। गुरुणाऽध्ययनार्थमाहूतश्चेत् सुस्थिर चित्तो गुरो: सकाशात् वेदान् अधीयीत। विद्यारम्भे समाप्तौ च गुरोश्चरणौ शिरसानमत्। मेखलाजिनवासांसि जटादण्डकमण्डलून शास्त्रे त्रैवर्णिकानां कृते यथा निर्दिष्टं कुशपाणि: सन् यज्ञोपवीतं च धारयेत्। सायं प्रात: भिक्षां याचेत्, तद्भैक्ष्यं गुरवे निवेदयेत्, यदि गुरुणा अनुज्ञात: तर्हि भुञ्जीत नो चेदुपवासं कुर्यात्। सुशीलोऽल्पभोजी चतुर: श्रद्धालु: जितेन्द्रिय: सन् भिक्षार्थमेव स्त्रीषु स्त्रोजितेषु च स्त्रीलम्पटेष्वितिभाव: व्यवहरेत्। नैष्ठिको ब्रह्मचारी कामिनीकथां त्यजेत् यतो हि वलवन्ति इन्द्रियाणि यतेरपि वलान्मन आकर्षन्ति। युवा सन् ब्रह्मचारी केशप्रसाधनं स्नानंनेत्रयोरञ्जनादिकं गुरुस्त्रीभिर्युवतिभिश्चात्मनो न कारयेत्। जनसमाजेऽपि यावत्प्रयोजनं तावदेव स्थितिं करोतीति तथाभूत: सन् ब्रह्मचारी पुमान् सुतामपि जह्यात् यतो हि प्रमदाऽग्नि: समा पुमांश्च घृतकुम्भतुल्यो भवति। अत एवोक्तं — "घृतकुम्भसमानारी तप्तां गारसम: पुमान् तस्माद्घृतञ्च वह्निञ्चनैकत्र स्थापयेद् बुध:।" असौ जीव: सद्बुद्ध्या इदं देहादि रूपं जगत् मिथ्याभूतं निश्चित्य यावन्मायामुक्तो न भवेत्

तावत् स्त्रीपुमानिति द्वैताद् भोग्यता बुद्धिभ्रवेदतस्त्यजेत्। अभ्यञ्जनमत्र शिरसा तैलादिना, स्त्र्यवलेखा चित्रलेखनं तन्निरीक्षणं वा मांसं, दग्धान्नमसूरादि, मद्यं स्रग्गन्धलेपालङ्कारांश्च ब्रह्मचारिणस्त्यजेयुः[1]

एवमेव ब्रह्मचारिणो नियमा एकादशस्कन्धेऽप्यभिहिताः सन्ति। यथाः उपनयनाख्यं द्वितीयं संस्कारं प्राप्य गुरुकुले वसन् वेदमधीयीत् तदर्थञ्च विचारयेत्, गुरुणा आहूतश्चेत्तदा संयतेन्द्रियो भूत्वा वेदमधीयीतेतिभावः। किं भूतः सन् ब्रह्मचारी तद्वक्ति – 'न धौता दन्ता वासांसि च येन न रक्तं पीठमासनं येन एवंभूतः मेखला–मृगचर्म–अक्षमाला–यज्ञोपवीत–कमण्डलू–कुशांश्च धारयन् जटिलश्च स्यात्। स्नान–भोज–होम–जप–मूत्र–पुरीषोत्सर्गे मौनी भवेत्। न कक्षोपस्थगतानि रोमाणि च न छिन्द्यात्। किन्तु भूमौघर्षयेत् नापित्स्पर्शे व्रतच्युतित्वात् स्वयं छेदनस्य निषिद्धत्वात् रोमच्छेदे तु चिक्कणत्वात् कामोद्वेगः स्यादत एतदुक्तम्। ब्रह्मव्रतधरो ब्रह्मचारी कदाचिदपि वीर्यस्खलनं न कुर्यात् वीर्यस्खलिते सति आसु स्नात्वा कृतप्राणायामः सन् संख्यानुक्तौ शतं गायत्री जपेत्। पूर्वमुखे सन्ध्ये उपासीत् शुचिर्भूत्वा अग्नि–सूर्य–आचार्य–गौ–विप्र–गुरु–वृद्ध–देवांश्च उपासीत् ततश्च गायत्री जपन् स्थिरचित्तो भवेत्। होमेन – अर्घ्येण प्रणामेन तृणादिना च क्रमेणाग्न्यादीनामुपासनं ज्ञेयम्। माध्यात्मिकसन्ध्या निमित्तमौनाभावात् द्विवचवनम्। अत्रकेवलं वाङ्नियमाभावो ज्ञाप्यते

---

१. नारद उवाचः –
*ब्रह्मचारी गुरुकुले वसन् दान्तोगुरोर्हितम्। आचरन् दासवन्नीचो गुरौ सुदृढनिश्चयः।।*
*सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान्। उभे सन्ध्ये च यतवाग् जपन् ब्रह्म समाहितः।।*
*छन्दांस्यधीयीत गुरोराहूतश्चेत् सुयन्त्रितः। उपक्रमेऽवसाने च चरणौ शिरसा नमेत्।।*
*मेखलाजिनवासांसि जरादण्डकमण्डलून्। विभृयादुपवीतं च दर्भ पाणिर्यथोदितम्।।*
*सायं प्रातश्चरेद्भैक्षं गुरवेतन्निवेदयेत्। भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत् क्वचित्।।*
*सुशीलो मितभुग् दक्षः श्रद्दधानो जितेन्द्रियः। यावदर्थं व्यवहरेत् स्त्रीषु स्त्रीनिर्जितेषु च।।*
*वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः। इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः।।*
*केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम्। गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा।।*
*नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान्। सुतामपि रहो जह्यादन्यदा यावदर्थकृत्।।*
*कल्पयित्वाऽऽत्मना यावदाभासमिदमीश्वरः। द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः।।*
*अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेपा मिषं मधु। स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः।।* १२ अध्याये, श्लो. १–१०, १२
*– श्रीमद्भागवते सप्तमस्कन्धे*

न तु — "द्वे सन्ध्ये कुर्यात् "सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविहासदा।"[1] आचार्य मां ज्ञात्वा मर्त्यबुद्ध्या कर्हिचिन्नाभ्यसूयेत् यतो हि गुरुः सर्वदेवमयो भवति। सायं प्रातः भैक्ष्यमन्यदपि आनीय गुरवे निवेदयेत् तेनाज्ञाप्तश्चेद् भुञ्जीत तदपि प्रसन्नः सन्। शुश्रुषमाणः सदा अनुद्धत इव आचार्यमुपासीत्। यान शय्याऽऽसन स्थानैः समीपस्थः सन् कृताञ्जलिर्भवेत्। यावद् विद्या समाप्यते तावद् भोगविवर्जितः अखण्डितं व्रतं धारयन् गुरुकुले वसेद्। यदि नैष्ठिकब्रह्मचारी वेदविदां लोकं महर्लोकं ततो ब्रह्मलोकमारोदुमिच्छति चेत् तदा स्वाधीतस्यानृण्यरुपदक्षिणार्थं स्वीयं देहे समर्पयेत्। वेदाभ्यासजं तेजो ब्रह्मवर्चः तद्वान् ब्रह्मवर्चस्वी निष्पापो भेदबुद्धिरहितश्चाग्नौ गुरौ आत्मनि सर्वभूतेषु च परमात्मानं सामुपासीत्। ब्रह्मचारी स्त्रीणामवलोकनं स्पर्श—भाषणं—परिहासादिकं—मिथुनीभूतान् प्राणिनश्च दूरतस्त्यजेदन्यथा सौभरिमुनिवद् विषयासक्तिः स्यात्। पवित्रता—आचमनं—सन्ध्योपासनं—अकौटिलयं, तीर्थ सेवा जपादिकञ्च कुर्यात् तथा अस्पृश्यादीनां म्लेच्छानां स्पर्शवर्जनं अभक्ष्याणां लशुनादीनां अभक्षणे एवं असंभाष्याणां मद्यपमहापातक्यादीनां अभाषणं सततं कुर्यात्।[2]

---

१. अत्रिस्मृतिः।

२. द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः। वसन् गुरुकुले दान्तो ब्रह्माधीयति चाहुतः।।
मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून्। जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान् दधत्।।
स्नानभोजहोमेषु जपोच्चारे च वाग्यतः। न च्छिन्द्यान्नखरोमाणिकक्षोपस्थगतान्यपि।।
रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम्। अवकीर्णेऽवगाह्याप्सु यतासु स्त्रिपदीं जपेत्।।
अग्न्यर्काचार्य गोविप्र गुरुवृद्ध सुराञ्छुचिः। समाहित उपासीत सन्ध्ये च यतवाग् जपन्।।
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्। न मर्त्यबुद्ध्या सूयेत सर्वदेवमयो गुरुः।।
सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत्। यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः।।
शुश्रुमाण आचार्यं सदोपासीत नीचवत्। यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः।।
एवं वृत्तोगुरुकुले वसेद् भोगविवर्जितः। विद्या समाप्यते यावद् बिभ्रद व्रतमखण्डितम्।।
यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम्। गुरवे विन्यसेद् देहं स्वाध्यायार्थं बृहद्व्रतः।।
अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम्। अपृग्धीरुपासीत् ब्रह्मवर्चस्व्यकल्मषः।।
स्त्रीणां निरीक्षणं नोस्पर्शसंलापक्ष्वेलनादिकान्। प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत्।।
शौचमाचमनं स्नानं सन्ध्योपासनमार्जवम्। तीर्थसेवा जपोऽस्पृश्याभक्ष्यासम्भाष्यवर्जनम्।।
—श्रीमद्भागवते एकादशस्कन्धे १७ अध्याये, श्लो. २२—३४।

मनः संयमो विषयानभिध्यानम्, वाक्संयमो व्यर्थाऽऽलापराहित्यम्, कायसंयमश्च भोगराहित्यम् एतत्त्रयंसंयमयुतः सर्वभूतेषु मद्भावनायुक्त ब्रह्मचारी–नियमो वर्तते। अनवरततपस्यया भस्मीभूतकर्मवासनोऽत एव विशुद्धोजीवन्मुक्तो मद्भक्तो ब्रह्मचारी ब्राह्मणो–ऽग्निरिवज्वलन् ईश्वरो जीवकलया प्रविष्टोभगवानिति लक्षणसम्पन्नो जायते। अनन्तरं यथावत् गृहस्थाश्रमं प्रवेष्टुमिच्छन् गुरवे दक्षिणां दत्वा समावर्तेत्। सकामश्चेद् गृहं निष्कामश्चेद् वनं गच्छेत् सर्वतो विरक्तश्चेत् संन्यसेदिति भावः।[1]

## (४) संन्यासिनो नियमाः

समर्थश्चेत् संन्यस्य ग्रामे–ग्रामे एकैकां रात्रिं नयेत् निरपेक्षश्चेन्महीं विचरेत्। यद्यसौ संन्यासी वस्त्रं विभृयात्तर्हि गुह्यप्रदेशं आच्छाद्यते येन तावन्मात्रं कौपीनं धारयेत्। आपदि त्यक्तमपि दण्डकमण्डल्वादेरन्यत् किमपि न धारयेत्। आत्मनि रमते इति आत्मरतिर्निराश्रयः सर्वप्राणिहितैषी शान्तोनारायणध्यानरत एकाकी एव संन्यासी विचरेत्। सदासतः कार्यकारणः परे आत्मनि अदो विश्वं आत्मानं च पश्येत्। सर्वत्र सदसन्मये जडचेतनमये जगति आत्मनि च परं ब्रह्म पश्येत्। सन्धौ सायं प्रातश्च आत्मदिदृक्षुरात्मनो गतिं तत्त्वमितिभावः तत्पश्यन् वन्धादिकञ्च कल्पितं पश्यन् सर्वत्र परं ब्रह्मैव पश्येत्। अस्य देहस्य प्रभव उत्पत्तिरप्ययोनाशश्च यस्मातदुभयं नेच्छेत् जन्ममरणहेतुभूतमिति भावः। निश्चितं मृत्युं जीवनञ्च नाभिनन्देत किन्तु कालमेव केवलं प्रतीक्षेत्। असच्छास्त्रेषु अनात्मप्रतिपादके

---

१. *सर्वाश्रयप्रयुक्तोऽयं नियमः कुलनन्दन!। मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः।।*
*एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन्। मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः।।*
*अथानन्तरमावेक्ष्यन् यथा जिज्ञासितागमः। गुरवे दक्षिणां दत्वा स्नायाद् गुर्वनुमोदितः।।*
*गृहं वनं वोपदिशेत् प्रव्रजेद् वा द्विजोत्तमः। आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत्।।*
— श्रीमद्भागवते एकादश स्कन्धे १७ अध्याये, श्लोक ३५–३८।

शास्त्रेषु आसक्तो न भवेत् जीविकाशास्त्रं ज्यौतिषवैद्यादि शास्त्रं नाश्रयेत्। वादविवादान् परित्यजेत् कमपि पक्षं नाश्रयेत्। बलात् शिष्यान् न कुर्वीत बहूनध्यात्मेतरान् ग्रन्थान् नाभ्यसेत्। व्याख्यां व्याख्यानं न कुर्यात् कुत्रचिन्मठादीन् न कारयेत्। शान्तस्य समचित्तस्य महात्मनो यतेः आश्रमो दण्डकमण्डल्वादि धर्म द्योतको न भवति किन्तु मुक्तिप्रयोजनको भवत्यतो विमृयात्त्यजेत् वा नास्य दोषः। संन्यासी प्रकटाश्रमादि चिह्नोऽपि अव्यक्ताश्रमादिचिह्नो मनीषी सन् उन्मत्तवत्, वाग्मी सन् मूकवत् नृणां दृष्ट्याऽऽत्मानं दर्शयेदेतज्जनसङ्गपरिहार्थमूक्तम्।[1]

एवमेव संन्यासिनो नियमा एकादशे स्कन्धेऽपि प्रोक्ताः। तद्यथा संन्यसतो विप्रस्य दारादिरूपिणो देवा अस्मानतिक्रम्य परमात्मानं समीयादित्ययं मत्वा विघ्नान् सम्पादयन्ति। संन्यासी यदि वस्त्रं विमृयाच्चेत् तर्हि केवलं गुह्यस्थानमाच्छाद्यते येन तावन्मात्रं कौपीनमेव धारयेत् प्रैषमन्त्रोच्चारणात् पूर्वं यत् त्यक्तं तद्दण्डपात्राभ्यामन्यत्किमपि न धारयेत् आपदि त्यक्तंमपि धारयेत्। ते च त्रयो मन्त्रास्तेषामुच्चारणं गृहस्थैर्न कार्यम्। व्युत्क्रमोच्चारणे तु न दोष इति। वंशीधरीटीकायां स्पष्टीकृतमस्ति। सम्प्रति तान् प्रैषान् मन्त्रान् दर्शयति — ॐ भूः

---

१. कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः। ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम्।।
विभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम्। त्यक्तं न दण्डलिङ्गादेरन्यत् किञ्चिदनापदि।।
एक एव चरेद् भिक्षुरात्मारामोऽनपाश्रयः। सर्वभूतसुहृच्छान्तो नारायणपरायणः।।
पश्येदात्मन्यदो विश्वं परे सदसताऽव्यये। आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये।।
सुप्त प्रबोधयो सन्धावात्मनो गतिमात्मदृक्। पश्यन् वन्धं च मोक्षं च मायामात्रं न वस्तुतः।।
नाभिनन्देद् ध्रुवं मृत्यमध्रुवं वाह्यजीवितम्। कालं परं प्रतीक्षेत् भूतानां प्रमथाऽप्ययम्।।
नासच्छास्त्रेषु सज्जेत नोपजीवेत् जीविकाम्। वादवादांस्त्येजेत् तर्कान् पक्षङ्कं च न संश्रयेत्।।
न शिष्याननुवध्नीत ग्रन्थान्नैवाभ्यसेद् बहून्। न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित्।।
न यतेराश्रमः प्रायो धर्महेतुर्यदात्मनः। शान्तस्य समचित्तस्य विभृयादुतवा त्यजेत्।।
अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मतवालवत्। कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम्।।
अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मतवालवत्। कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम्।।

संन्यस्तं मया। ॐ भुवः संन्यस्तं मया। ॐ स्वः सन्यस्तं मया स्वाहेति प्रथमप्रैषः। ॐ पुत्रैषणाया वित्तैषणाया लौकैषणायाश्च व्युत्थितोऽहं स्वाहेति द्वितीयप्रैषः। ॐमयं सर्वभूतेभ्यो मतः स्वाहेति तृतीय प्रैषः। हिंसानिवृत्यर्थं दृष्टिपूतं पादं न्यसेत्, वस्त्रपूतं जलं पिवेत्, सत्यपूतां वाचं वदेत्, मनःपूतं च समाचरेत्। वाचो दण्डो मौनम्, देहस्य दण्डोऽनीहा सकामकर्मत्यागः, चेतसोदण्डः प्राणायामा एते दण्डा यस्य न सन्ति स वेणुभिर्धृतै यतिर्न भवति संन्यासफलं न लभेदिति भावः। अङ्गे धृतैर्वेणुभि र्वेति श्लेषोऽपि व्याख्येयः। विगर्ह्यान् अभिशप्तपतितानिति[1] श्रीधरीटीकायामुट्टङ्कितम्। तान् परिहरन् पूर्वतोऽनिश्चितान् सप्तगृहान् प्रति भिक्षां चतुर्षु वर्णेषु याचेत्, यावता लब्धेन तावतैव संतुष्येत्। बहिर्जलाशयं गत्वा जलाशये आचम्य मौनीभूय प्रोक्षणादिभिः, शोधितमन्नं विष्णुव्रणं ब्रह्मार्कभूतेभ्यो विभागं कृत्वा अवशेषं अशेषमानीतं भुञ्जीत। अशेषमिति उक्तेरधिकारग्रहणे निरस्तम्। निरस्तम्। आत्मनि परमात्मनि अनुभवविषयीकृते तुष्टस्तेनैवात्मनाविहारो यस्य स धैर्य्ययुक्तः: वशीकृतेन्द्रियः आसक्तिरहितश्चैकाकी सन् महीं विचरेत्। विविक्तमेकान्तं क्षेमं निर्वाधं शरणं स्थानं यस्य सः आत्मानं जीवं यथा परमात्मना सह अभेदेन चिन्तयेत् तथा मद्भावेन विमलः आशयोऽन्तःकरणं यस्य एवंभूतः सन् सायुज्यार्थं चिन्तयेदिति भावः। ज्ञाननिष्ठया तत्त्वमसीति महावाक्येन आत्मनो जीवस्य बन्धमोक्षकारणं पुनः पुनः विचारयेत् यतोहि इन्द्रियविक्षेपो विषयासक्तिरेव बन्धः एषां इन्द्रियाणां विषयेभ्यो नियन्त्रणमेव मोक्षोऽभिहितः। तस्मात् कारणात् षडिन्द्रियवृन्दं नियम्य विषयसुखेभ्यो विरक्तः सन् आत्मनि अविनाशिसुखं प्राप्यं मद्‌भावेन युक्तोमुनिर्विचरेत्। भिक्षार्थं नगरग्रामगोष्ठयाभिकजनसमूहान् प्रविशन् पुण्यप्रदेश—पुण्यसरित्— पुण्यपर्वत—पुण्याश्रययुतां महीं विचरेत्।[2]

---

१. *सतां वा ह्यसतां वापि ब्रह्महत्यादिना तु यः। अपियुक्तो हि लोकेषु सोऽभिशस्तः प्रकीर्तितः॥*
*कर्मणा योजितश्चैव देहदोषैश्च कुत्सिताः। पतितास्तान् विजानीयान्महापातकिनस्तथा॥*
— मनुस्मृतिः।

२. *विप्रस्य वै सन्यसतो देवा दारादिरूपिणः। विघ्नान् कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम्॥*
*विभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम्। त्यक्तं न दण्डपात्रायामन्यत् किञ्चिदनापदि॥*
*दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिनेज्जलम्। सत्यपूतां वदेद्‌ वाचं मनःपूतं समाचरेत्॥*
*मौनानीहानिलायामा दण्डा वाग्देहचेतसाम्। न ह्येते यस्य सन्त्यङ्ग वेणुभिर्नभवेद्‌ यतिः॥*
*भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत्। सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता॥*
*बहिर्जलाशयं गत्वा तत्रोपस्पृश्यवाग्यतः। विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम्॥*
*एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः। आत्मक्रीड आत्मरत आत्मवान् समदर्शनः॥*
*विविक्तक्षेमशरणो मद्भावविमलाशयः। आत्मानं चिन्तयेदेकमभेदेन मया मुनिः॥*
*अन्वीक्षे दात्मनो "बन्धं मोक्षं च ज्ञाननिष्ठया। बन्ध इन्द्रियविक्षेपो मोक्ष एषां न संयमः॥*
*तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः। विरक्तः क्षुल्ल कामेभ्यो लब्ध्वात्मनि सुखं महत्॥*
*पुरग्रामव्रजान् सार्थान् भिक्षार्थं प्रविशंश्चरेत्। पुण्यदेशसरिच्छैल वनाश्रमवतीं महेम्॥*
*—श्रीमद्भागवते एकादशस्कन्धे, १८ अध्याये, श्लोक १४–२४।*

अधिकतया वानप्रस्थाश्रमेषु भैक्ष्यमाचरेत्। यतः शिलवृत्याप्राप्तेन अन्नेन शुद्धान्तःकरणं अत एव निवृत्तमोहः सन् आशुमुक्तो भवति। कणिशाद्यर्जनं शिलम्, कणिशं धान्यमञ्जरी। दृश्यमानं मिष्ठान्नादि भोग्यवस्तु वस्तुतया सत्यत्वेन न पश्येत्, यतो विनश्यति। अतोऽयमुत्र सर्वत्रैव चासक्तचित्तः सन् तदर्थं कर्तुयिष्टात् कर्मजालात् विरमेत्। एतत् ममतास्पदं जगत् तथा मन आदिभिः संहतं सम्बद्धमहंकारास्पदमेतच्छरीरं च तज्जन्यं सुखं च सर्वं मायामात्रमिति स्वप्नदृष्टान्तेन त्यक्त्वा न पुनस्तान् चिन्तयेत्। सम्प्रति परमहंसधर्मानाह — ज्ञानवान् वा शब्दोऽत्र समुच्चयार्थो न विफल्यार्थः, शिष्यसङ्गाद्यनपेक्षः दण्डादिसहितानाश्रमान् विधि–निषेधातीतः सन् विचरेत्। बुधोऽपि बालकवन्मानापमानशून्यः सन् वेदार्थज्ञोऽपि अनिताचारं कुर्यात्। निपुणोऽपि जडवच्चरेत् विद्वानपि उन्मत्तवत् वदेत्। अन्यथा लोकरञ्जनाद्बन्धः स्यात्। वेदे ये वादा अर्थवादा तेषु रतः आसक्तो न स्यात्। परवञ्चनार्थं गृहीतवेशोपाखण्डस्तद्वान् न भूयात्। हैतुकः केवलतर्कनिष्ठो न भवेत्। शुष्केजलताडनवन्निष्प्रयोजने कमपि पक्षं न संश्रयेत्। धीरो जनाद्भीतो न भवेत् कमपि जनञ्च भयं नोत्पादयेत् दुरुक्तानि सहेत् कञ्चन् न तिरस्कुर्यात्। भूतेषु प्राणिषु आत्मनि चावस्थितः, यथा जलपात्रेषु एक एवेन्दु अवस्थितो भवति तथा भूतानि शरीराण्यपि पाञ्चभौतिकत्वेन एकात्मकानि भवन्ति तस्माद् वैरं न कुर्याद् सर्वभूतानां भगवच्छरीरकत्वात् क्वापि भूते कृतवैरे तदन्तर्यामिपुरुषपर्यन्तगामित्वादित्यतो देहमुद्दिश्य केनापि सह वैरं न कुर्यात्। क्वचित् समये–समये भोजनमप्राप्यापि न दुःखी भवेत्। प्राप्यापिनानन्दी भवेत् यतो हि लाभालाभौ द्वावपि दैवाधीनौ भवतः। युक्तमाहारार्थं चेष्टेत् यतो आहारतो प्राणधारणमुचितं भवति, कथं तेन प्राणधारणेन तत्त्वं विचार्य्यते,तेन तत्त्वविचारेण जीवो बन्धमोक्षाभ्यं विमुच्यते। दैवेच्छया सरसं विरसं वान्नं प्राप्तं भुञ्जीत। तथैव प्राप्तं प्राप्तं शय्यां वासश्च मुनिः सेवेत्। ज्ञानी शौचं आचमनं स्नानं स्वेच्छया कुर्यात् न तु चोदनया विधिकिङ्करत्वेन अन्यान् नियमानपि तथैव कुर्यात् तथा लोकसंग्रहार्थमहं करोमि। ज्ञाननिष्ठस्य पुंसः भेदप्रतीतिः मनोऽन्यस्फूर्तिर्नास्ति। या पूर्वमासीत् सापि मज्ज्ञानेन

हता भवति। अथापि मरणपर्यन्तं कदाचिद् वाधितैव व्याप्तिर्भवति यथा स्वाप्निकी। ततो देहान्ते च स मया सह एकी भवति मुक्तो भवतीत्यर्थः।[1]

न विचारितो मत्प्राप्तिसाधनं येनैवं भूतो आत्मज्ञानी दुःखमेवोत्तरफलं येषु तेषु विषयेषूत्पन्नवैराग्यो आत्मजिज्ञासुर्मुनि गुरुं मुनिमुपाव्रजेत्। अत्र जिज्ञासापदस्य समवाय—सम्बन्धेन विचारे लक्षणा तद्विरहे गुरुपसत्तेर्निरर्थकत्वादिति दीपिनी टीकायामभिहितम्। श्रद्धालुरनसूयुर्मलो यावत् कालं ब्रह्म विजानीयात् तावत् कालपर्यन्तं आहतः सन् मद्दृष्ट्यैव गुरुं सेवेत्। अवशीकृतपडिन्द्रियवर्ग अत्यासक्तबुद्धिर्ज्ञानवैराग्यशून्यस्त्रिदण्डोपलक्षितं संन्यासं जीविकासाधनं करोति। न विपक्वा कषाया वासना यस्यैवं भूतो धर्मविनाशको देवान्

---

१. वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा।।
नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्यति। असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात्।।
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम्। सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत्।।
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेद्विधिगोचरः।।
बुधो वालकवत् क्रीडेत् कुशलो जडवच्चरेत्। वदेदुन्मत्तवद् विद्वान् गोचर्या नैगमश्चरेद्।।
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः। शुष्कवादविवादे न कंचित् पक्षं समाश्रयेत्।।
नो द्विजेत जनाद् धीरो जनं चोद्वेजयेन्नतु। अतिवादांस्तितिक्षेत नावमन्येत कंचन।।
देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचिद्।
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः। यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च।।
अलब्ध्वा न विषीदेत काले कालेऽशनं स्वचित्। लब्ध्वा न हृष्येद् धृतिमानुभयं दैवतन्त्रितम्।।
आहारार्थं समीहेत युक्तं तत्प्राणधारणम्। तत्त्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते।।
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्टमुतापरम्। तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः।।
शौचमाचमनं स्नानं न तु चोदनया चरेत्। अन्यांश्च नियमाज्ज्ञानी यथाहं लीलयेश्वरः।।
नहि तस्य विकल्पाख्या या च मद्वीक्षया हता। आदेहन्तात् क्वचित् ख्यातिस्ततः सम्पद्यते मया।।
—श्रीमद्भागवते एकादशस्कन्धे १८ अध्याये, श्लोक २५—३७।

आत्मानं आत्मस्थं मां च तिरस्करोति स उभयलोकाद् भ्रष्टो भवति। मनोजय: शम: मनसा वाचा कर्मणा च हिंसाऽभावो तपस्या तत्त्वविचारश्च सन्यासिनो नियमा: कथिता:[1]



---

१. दु:खोदर्केषु कामेषु जातनिर्वेद आत्मवान्। अजिज्ञासितमद्धर्मो गुरु मुनिमुपाव्रजेत्।।
तावत् परिचरेद् भक्त: श्रद्धावाननसूयक:। यावद् ब्रह्म विजानीयान्मामेव गुरुमाहत:।।
यस्त्वसंयतषड्वर्ग: प्रचण्डेन्द्रियसारथि:। ज्ञानवैराग्यरहित स्त्रिदण्डमुपजीवति।।
सुरानात्मानमात्मस्थं नितनुते मां च धर्महा। अविपक्व कषायोऽस्मादमुष्याच्च विहीयते।।
.............................................................।।
भिक्षोर्धर्म: शमोऽहिंसा तप ईक्षा ...................................
— श्रीमद्भागवते एकादशस्कन्धे, १८ अध्याये श्लोक ३८–४१/१–२।

# पञ्चमोऽध्यायः

१. जीवानां फलम्
२. कर्मकाण्डोपासनाविधिः
३. तत्त्वचिन्तनम् सद्योमुक्तिः, जीवमुक्तिः, क्रमिकमुक्तिः

# पञ्चमोऽध्यायः

## (१) जीवानां फलम्

इह खलु संसारे सुखं मे शाश्वतं स्याद् दुःखं च कदाचिन्माभूदितिबुद्ध्या दुःखं हातुं सुखं चोपलब्धुं सततमभिलषति प्राणिमात्रम्।[1] नहि कोऽपि विवेकी स्वल्पे सुखमनुभवति, अपि तु सर्वोऽपि जनोऽधिकाद्धिकमेव सुखं वाञ्छति। सुखाऽन्वेषणे शतीसहस्त्रं सहस्त्री लक्षं लक्षी च कोटीशत्वं वाञ्छति, स चार्बुदपतित्वमभिलषति, स राज्यमभिप्रैति, राजा सम्राज्यमाकाङ्क्षति, सम्राडपीन्द्रयपदमीहते।[2] एवं तृष्णाया उत्तरोत्तरं वर्द्धनात् कामनानिरतस्य पुंसो बुद्धे रन्तो न भवति, न वा सुखमुपजायते। अत एवोद्घोषितं भगवता श्रीकृष्णेन गीतायामुक्तम् —

बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्।[3]
पुनश्च भूयेयमहं स्वराडिति प्रबुद्धतर्षो न सुखाय कल्पते।[4]

---

१. चराचरे जगत्यस्मिन् सर्वो वाञ्छति मानवः।
सुखी स्यां न तु दुःखीति कृत्वा मनसि कल्पनाम्।। ५।।
सुखमीप्सितम्।। १३९/६।।
दुःखादुद्धिजते जन्तुः सर्वस्य सुखमीप्सितम्।। १३९/६।।

२. (क) इच्छति शती सहस्त्रं साहस्त्री लक्ष्मीहते।
लक्षी कोटिं च कोटिशः क्रमशः सर्वमीहते।। प्रेतकल्प २/४।।

(ख) निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्त्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वाञ्छति।
चक्रेशः पुनरिन्द्रतां सुरपतिः ब्राह्मं पदे याचते
ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधिं को गतः।।
—भर्तृहरिः, वैराग्यशतकम्।

३. श्रीमद्भगवद्गीतायाम् द्वितीयेऽध्याये, श्लोक ४१।

४. श्रीमद्भागवते दशमस्कन्धे, ५१ अध्याये, श्लोक ५३।

एवं जीवो यावदनन्तं सुखं न लभते, तावत् प्रयतमान् एव तिष्ठति। यथा चाह भगवती छान्दोग्यश्रुति – "यो वै भूमा तत्सुखम्, नाल्पेसुखमस्ति, भूमैव सुखम्, भूमात्वेव विजिज्ञासितव्य:।"[१]

तथा च भगवत्स्वरूपसाक्षात्कार एवाऽऽत्यन्तिकमनन्तं च सुखं जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य च फलमस्ति। आत्यन्तिकं निरतिशयं सुखंमेव मोक्ष:, मुक्ति:, अपवर्ग:, कैवल्यम् निर्वाणम्, नि:श्रेयसम्, परमपुरुषार्थश्चोच्यते। एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति। एतदेव लब्ध्वा मानवो मृत्युमुखात्प्रमुच्यते। इतोऽन्यत् साधनं नास्ति मोक्षलाभाय। तथा चोक्तम् – "तमेव विदित्वेति मृत्युमेति नान्य: पन्था विद्यतेऽयनाय।"[२]

अत एवोपदिशति बृहदारण्यके मैत्रेयीं प्रति योगीयाज्ञवल्क्य: –

"आत्मा वा अरे द्रष्ट्व्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च।"[३]

श्रीमद्भगवद्गीताऽपि यल्लाभादपर: कश्चन लाभ: श्रेष्ठो नास्ति, तं लब्ध्वेषदपि दु:खेन नाभिभूयते जीव इति स्पष्टमुद्बोधितवती।[४]

सत्स्वपि मोक्षप्राप्तेरनेकेषु साधनेषु दार्शनिकं ज्ञानं सर्वोत्कृष्टं परमोपयोगि चेत्यत्र नास्ति काचित् संशीति: यतोहि दर्शनशास्त्राश्रयणमन्तरेण न खलु विचित्रकर्मरहस्यं हृदयङ्गमं विधातुं शक्यते। दर्शनविज्ञानसम्पन्नो मानवो दार्शनिकनेत्रसाहाय्येन गम्यस्थानमधिगन्तुमर्हति।

---

१. छान्दोग्योपनिषद् ७/२२/१।

२. श्वेताश्वतरोपनिषद्।

३. बृहदारण्यकोपनिषद् २/४/५।

४. यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत:।
यस्मिन् स्थितो न दु:खेन गुरुणापि विचाल्यते।।
—श्रीमद्भगवद्गीतायां ५ अध्याये, श्लो० २२।

"आत्मेन्येवोपासीत्"[१] "तमेतमात्मानमेत्"[२] "तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति"[३] "तरतिशोक-मात्मवित्"[४] इत्यादि श्रौतवचः समूहचारितार्थ्यहितवे दर्शनानि मुमुक्षाणां दिव्यनेत्राणि स्वीकृतानि सन्ति इति षड्दर्शनसमुच्चये, महाभारतस्य शान्तिपर्वण्यपि।

एवं प्राणिमात्रस्य सततं भवति सुखेच्छा स्वाभाविकी, परं लौकिकैरूपायै र्न सम्भवति निरतिशयस्य सुखस्यावाप्तिः। अतस्तदुखलब्धयेऽपौरुषेयवेदबोधितेतिकर्त्तव्यताश्रयणमेव श्रेयस्करं मन्यन्ते वेदविदो विद्वांसः। वेदाः सन्ति भारतीयस्य धर्मस्य दर्शनस्य च प्राणाः। भारतीयधर्मे या जीवशक्तिर्दृष्टिगोचरी भवति, तस्या मूलकारणं वेदा एव विद्यन्ते। वेदेभ्यः प्रसृता विविधा विचारधारा भारतभूमेर्विचारकाणां बुद्धीराप्लावयन्ती समस्तं विश्वमुपकरोति। अतो भारतीयधर्मदर्शनयोराकृतेः प्रकृतेरुद्गमस्य विकासस्य च समुचितानुसन्धानार्थं वेदानामनुशीलनं नितान्तमावश्यकमस्ति।

ऐतिहासिकदृष्ट्या विचारे क्रियमाणे समेषां दर्शनानां मूलं वेदेषूपलभ्यते। तत् एव शनैः शनैः ब्राह्मणारण्यकोपनिषद् द्वारा विकाशमुपगच्छन्ति दर्शनानि किञ्चिदभिनवरूपेण दृष्टिगोचरी भवन्ति। अत एव सर्वधर्मानुयायिन आचार्या दार्शनिकविचारधारायां संलग्नाः सन्तस्तद्बलेनैव स्वानुकूलां परिस्थितिं विधाय स्वस्वसम्प्रदायस्थापने समर्थाः कृतकार्याश्चाभूवन्, भवन्ति, भविष्यन्ति च।

यथा हिमालयवर्तिनो मानसरोवरान्निःसृत्य विभिन्नानि स्रोतांस्यूर्वरां भारतभूमिं नित्यमाप्लावयन्ति, तथैव वेदब्राह्मणारण्यकोपनिषद्भ्य आविर्भूता विविधा आध्यात्मिका विचारा दार्शनिकानां विपश्चितां बुद्धीर्निरन्तरं पुष्णन्ति तर्पयन्ति च। एवं चोपनिषत्सु

१. बृहदारण्यकोपनिषद् १/४/७।
२. कौशितक्युपनिषद् ४/२॥
३. श्वेताश्वतरोपनिषद् ४/१५।
४. छान्दोग्योपनिषद् ७/१/३।

निहितवीजान्यादाय कालान्तरेऽनेकदार्शनिकसम्प्रदायानामुदयश्च जात:। औपनिषदस्य तत्त्वस्य पर्यवसानं तत्त्वमसीति महावाक्ये दृश्यते। तद्द्वारा जीवब्रह्मणोरैक्यं साधितमस्ति। एतदेव तत्त्वं हृदयङ्गमं विधातुं भारतीयदर्शनानां विकासोऽभवत्। भारतीयदर्शनाऽनुसारेण साधका: शनै: शनैरद्वैतवेदान्तस्योच्चतमे शिखरे समारूह्य, अनायासेनाद्वैतं ब्रह्मतत्त्वमधिगम्य न पुनर्जननीजठरेषु आवर्तन्ते। तथा चाह भगवतीश्रुति: – "न स पुनरावर्तते न स पुनरावर्तते।" गीतापीदमेव तथ्यं स्पष्टमुद्घोषयति – "हे अर्जुन! अब्रह्मभुवनाल्लोका पुनरावर्तिन: सन्ति, किन्तु हे कौन्तेय! मामुपेत्य पुनर्जन्म न जायते।" यद् गत्वा न निवर्तन्ते तत् मम परमं धाम विद्यते। "तस्मात् कारणात् तत् पदं सुखेच्छुभि: परिमार्गितव्यं यतो हि यस्मिन् गता जना भूयो न निवर्तन्ते[1]।"

तथा च दार्शनिकतत्त्वज्ञानाय वेदानां परिशीलनम्, वैदिकरहस्यानां यथार्थज्ञानाय च पुराणानां पर्य्यालोचनमत्यन्तमुपकारि भवति।

पुराणेषु प्राय: सूक्ष्मतया यत्र तत्र भारतीयदर्शनानां सिद्धान्तस्य विद्यमानत्वेऽपि त्रयाणां सांख्य–योग–वेदान्तदर्शनानां विशेषतो विवेचनमुपलभ्यते। तत्रापि सृष्टिप्रक्रिया–निरूपणप्रसङ्गे सांख्यदर्शनस्य प्रचुरप्रभावो दृश्यते।

सृष्टिरहस्यमनवधार्य सृष्टे: पारे गतिरसम्भवा। अत: सृष्टे विस्तृतं विवेचनं प्राय: प्रतिपुराणे जातमस्ति। सृष्टिविषये समन्वयभावनया सर्वान् भारतीयसम्प्रदायान् एकतासूत्रे सम्बद्धं पुराणेषु सांख्यदर्शनभित्तौ व्यवस्था कृताऽस्ति। प्रतिपुराणं यथाऽवसरं सांख्यदर्शन–सिद्धान्तानां व्यवहार: कृतोऽस्ति। सर्वपुराणेषु सृष्टेर्वर्णनं वैशद्येन वर्तते। पुराणानां पञ्चलक्षणे

---

१. (क) श्रीमद्भगवद्गीतायां ८ अध्याये, श्लोक १६।
(ख) श्रीमद्भगवद्गीतायां १५ अध्याये, श्लोक ६।
(ग) श्रीमद्भगवद्गीतायाम् १५ अध्याये, श्लोक ४।५

आद्यं लक्षणं सर्ग एवास्ति। पौराणिकसृष्टौ सांख्यदर्शननिर्दिष्टायाः सृष्टेर्विशेषाश्रयणमस्ति। सांख्यदर्शनस्य प्रभावः पुराणेषु प्रचुरः प्रदृश्यते। पुराणानां सृष्टिप्रकरणे सांख्यीयसृष्टेर्विपुले प्रभावे सत्यपि पौराणिकी सृष्टिः सांख्यकीयसृष्टेरक्षरशोऽनुकरणं न करोति, परं पौराणिकसृष्टेरस्ति किञ्चिन्नैजं वैशिष्ट्यं स्वातन्त्र्यं च। सांख्यदर्शनेन प्रभावितायामपि पौराणिकसृष्टौ स्वकीयं स्वातन्त्र्यं व्यक्तित्वमस्ति।

पौराणिकं सांख्यं निरीश्वरदर्शनं नास्ति, किन्तु तदस्ति सेश्वरं दर्शनम्। पुराणेषु सांख्यवेदान्तयो र्न किञ्चिद् वैशम्यं विरोधो वा दृश्यते। यथादर्शनविकासक्रमेऽवलोक्यते। अत्र तु सांख्यवेदान्तयोरस्ति मञ्जुलं सामञ्जस्यम्। प्रकृतिपुरुषयोर्द्वैतप्रतिपादकं सांख्यम् अद्वयब्रह्मप्रतिपादकेन वेदान्तेन सह पौराणिकस्य दर्शनस्य मूलभित्तिं निर्माति पुराणाऽनुसारेण प्रकृतिपुरुषौ न स्तः स्वतन्त्रे तत्त्वे, प्रत्युत तौ द्वावपि ब्रह्मप्रेरितावेव स्वकीयकार्यसम्पादने समर्थौ भवतः। अनयोर्द्वयोरप्यस्ति ब्रह्माध्यक्षो यत् प्रेरणयाऽनयोः कार्यकर्तृत्वं स्फुरति।

सांख्यदर्शने सृष्टेर्विकासः प्रकृतिपुरुषयोर्द्वयोर्द्वयोः पारस्परिकसंयोगस्य परिणतं फलमस्ति। सांख्यदर्शनानुसारेणेमौ द्वावप्यनादी नित्यौ च स्वीकृतौ स्तः। पुराणेषूभावपीमौ विष्णोर्द्वे रुपे अभिमते स्तः। अनयोरुत्पत्तिर्विष्णुसत्तायामेवाधारिताऽस्ति। विष्णुपुराणं स्पष्टं निर्दिशति यद् विष्णोर्निरुपाधिकाद् स्वरुपात् प्रधानपुरुषात्मकं रुपद्वयमाविर्भवति। भगवतो विष्णोः कालात्मकरुपद्वारेणेमौ द्वावपि प्रकृतिपुरुषौ सृष्टिसमये संयुक्तौ प्रलयदशायां च नियुक्तौ भवतः। भगवान् विष्णुः कालशक्तिद्वारैव सृष्टिप्रलयौ विधत्ते। तथाहि विष्णुपुराणे भगवान् व्यासः —

> विष्णोः स्वरूपात् परतो हि ते द्वे रुपं प्रधानं पुरुषं च विप्र!।
> तस्यैव तेऽन्येन धृते वियुक्तं रुपान्तरं तद् द्विज! कालसंज्ञम्।।[1]

---

१. श्रीविष्णुपुराणे प्रथमांशे द्वितीयोऽध्याये, श्लोक २४।

विष्णुपुराणे हि समेषां वैदिकाऽवैदिकानां सांख्यदर्शनसिद्धान्तस्य स्पष्टाऽस्पष्टरुपेण प्रतिपादनमस्ति। परं प्रधानतया सांख्यदर्शनस्य सृष्टिप्रलयसम्बन्धिनां तत्त्वविचारेणास्य पूर्ण सामञ्जस्यं विद्यते। तदनुसारं ब्रह्मणो प्रथमाभिव्यक्तिः पुरुषरुपेण भवति। व्यक्ताऽव्यक्ते तस्यान्यरुपे स्तः तथा कालस्तस्य परमं रुपं विद्यते। एवं यः प्रधानपुरुषव्यक्तकालतः परोऽस्ति एवं विष्णोः विशुद्धं परमं पदमस्ति। तदेव विशुद्धं ब्रह्मविष्णुरुपेण प्राप्यते। विष्णोः परमस्वरुपेण प्रधानपुरुषौ जातौ तस्यैवान्यरुपद्वारा तौ द्वौ सृष्टिप्रलयसमये संयुक्तौ वियुक्तौ च भवतः। तस्य रुपान्तरस्य नामास्ति कालः। कालस्य कार्यमस्ति सृष्टिसमये प्रधानपुरुषसंयोजनं प्रलयाऽवसरे च तयोर्वियोजनम्। कालरुपो भगवानस्ति अनादिः। अस्यान्तो न भवति। अतः संसारस्योत्पत्तिस्थितिप्रलया न कदापि अवरुद्धा भवन्ति। प्रलयकाले प्रधाने गुणानां साम्यावस्थाया स्थिते विष्णोः कालरुपः प्रवृत्तो भवति। प्रलयानन्तरं सर्गकाले समुपस्थिते, विश्वरुपः सर्वव्यापी सर्वभूतेश्वरः परमेश्वरः स्वेच्छया प्रधाने पुरुषे च प्रविश्य यथाऽक्रियाशीलोऽपि गन्धः स्वसन्निधिमात्रेण मनः क्षोभयति, तथैव स्वसन्निधिमात्रेण प्रधानं पुरुषं च सर्गाय प्रेरयति –

प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाऽव्ययौ।।
यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते।
मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः।।[1]

एवं शिवपुराणस्य वायवीयसंहितायां पूर्वार्द्धे प्रलयान्ते सृष्टिसमीहया प्रकृतिपुरुषयोः क्षोभात् परमेष्ठिन आज्ञया प्रधानात् सृष्टिः प्रतिपादिताऽस्तिः –

प्रभातायां तु शर्वर्यां प्रधानपुरुषावुभौ।
प्रविश्य क्षोभयामास मायायोगान्महेश्वरः।।

१. विष्णुपुराणे प्रथमांशे, द्वितीयोऽध्यायः २९–३० श्लोकौ।

ततः पुनरशेषाणां भूतानां प्रभवाऽप्ययात्।
अव्यक्तादभवत् सृष्टिराज्ञया परमात्मनः।।[1]

अपि च कूर्मपुराणस्य पूर्वार्द्धे परमेश्वरः प्रकृतिपुरुषयोः क्षोभकः स्वीकृतोऽस्ति। ततः सृष्टिचक्रं प्रचलतिः –

प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः।
क्षोभयामास योगेन परेण परमेश्वरः।।[2]

किञ्च वायुपुराणेऽपीश्वराधिष्ठितमेव प्रधानं स्थानम् जङ्गमात्मकं सकलं जगन्निर्मातीत्युक्तम् –

प्रधानं गुणवैषम्यात् सर्गकाले प्रवर्तते।
ईश्वराधिष्ठितात् पूर्वं तस्मात् सदसदात्मकम्।।[3]

अग्निपुराणेऽपि सर्गकाले भगवतो विष्णोः प्रेरणया प्रकृतिपुरुषद्वारा महत्तत्वाऽहङ्कारादी–नामाविर्भावो जायते, इत्युक्तमस्ति –

ब्रह्माऽव्यक्तं सदग्रेऽभून्न खं रात्रिदिनात्मकम्।
प्रकृतिं पुरुषं विष्णुः प्रविश्याऽक्षोभयत् ततः।।
सर्गकाले महत्तत्त्वमहङ्कारस्ततोऽभवत्।।[4]

तथा च प्रचलितसांख्यदर्शने प्रकृतिपुरुषावुभावपि अन्तिमे तत्त्वे मन्यते। परं पौराणिकसांख्ये तयोरूपरीश्वरस्यापि सत्ता स्वीक्रियते। यथोपनिषत्सु प्रकृतिपुरुषाणां परमपि ब्रह्मणः सत्ता स्वीकारात् सेश्वरस्य सांख्यस्य विवेचनं कृतमस्ति। तथैव महाभारते पुराणेष्वपि

---

१. *शिवपुराणस्य वायवीयसंहितायां १ अध्याये, श्लोक : २२–२३।*
२. *कूर्मपुराणस्य पूर्वार्द्धे ४१ अध्याये, श्लोक १३।*
३. *वायुपुराणे १/५/२२।*
४. *अग्निपुराणे १७ अध्याये, श्लोक २।*

सेश्वरस्यैव सांख्यस्य निरुपणं विद्यते, किन्तु सांख्यकारिकायां वर्णितं सांख्यं निरीश्वरमेवाऽस्ति। एतन्नये सृष्टिकार्ये नेश्वरस्य कार्याऽवश्यकताऽस्ति। यथा मानवशरीरे स्वभावतो नखलोमादीन्युत्पद्यन्ते, तथैव प्रकृतेः समस्तं जगज्जायते। ईश्वरकृष्णस्य विचारे प्रकृतिरेव निखिलं प्रपञ्चं निर्माति। तस्याः कृते तदर्थं कस्यापि प्रेरणाया नास्त्यावश्यकता भवति।

महामुनेः कपिलादारभ्य वार्षगण्यपर्यन्तं सांख्यदर्शनस्य सर्व आचार्या ईश्वरवादिन आसन्, किन्तु निरीश्वरस्य सांख्यस्य परम्परा ईश्वरकृष्णकृतसांख्यकारिकात एवोपलभ्यते। मन्ये वसुबन्धुप्रभृतीनां बौद्धविदुषां निरीश्वरवादेन प्रभावित ईश्वरकृष्णः प्राचीनं सेश्वरं सांख्यमभिनवरुपेण परिवर्त्य निरीश्वरवादाय प्रश्रयं दत्तवान्। अतएव तेन सांख्यकारिकायां प्रकृतिपुरुषावन्तिमे तत्त्वे मत्वा तत्त्वानां विवेचनं कृतम्, न च तयोरुपरि परमेश्वरस्य सत्ता स्वीकृता।

परमैतिहासिकं पौराणिकं सेश्वरं सांख्यं प्रकृतिपुरुषयोः संयोगार्थं ईश्वरस्यावश्यकता— मनुभवति। तन्मते पुष्करपलाशवन्निर्लेपस्य निरीहस्य पुरुषस्याचेतनायाश्च प्रकृतेः स्वयं संयोगो न भवितुमर्हति। अतस्तयोरूपरीश्वरसत्तास्वीकार आवश्यकः। यथाऽयस्कान्तस्य सम्मुखे जडेऽपि लौहे गतिरुत्पद्यते, तथैव पुरुषसन्निधानमात्रेणाऽचेतनायामपि प्रकृतौ चैतन्यमुपजायते। तेन सचेतना इव सा जगतः सृष्टौ प्रवर्तते। तथाचोक्तं स्वयमेव तथा कालिकापुराणेः —

जडाऽहं तस्य संयोगात् प्रभवामि सचेतना।  
अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा।।  
यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गम्।  
क्षेत्रक्षेत्रज्ञसंयोगात् तद् बिद्धि भरतर्षभ!।।[1]

१. *कालिकापुराणे ७ अध्याये, श्लोक १।*

तथा च चित्तसत्तायाः प्रभावादेव जडाऽपि प्रकृतिः अचेतना भूत्वा सृष्टिकार्यं विद्धार्तीति निश्चप्रचम्। एवं पुराणेषु सांख्यदर्शनस्य व्यापकः प्रभावो विलोक्यते। पुराणानामनुशीलनेन स्पष्टं प्रतीयते यत् तत्र सांख्यप्रक्रियायां बहुशः आश्रयणं कृतमस्ति। अग्नि—कूर्म—विष्णु—वायु—श्रीमद्भागवतादिपुराणानां तत्तदध्यायेषु सृष्टिप्रलययोर्वर्णनाऽवसरे सांख्यप्रक्रियायाः प्रचुरः प्रभावः परिलक्ष्यते। सांख्येन प्रचुरं प्रभाविताऽपि पौराणिकी सृष्टिस्तस्याऽक्षरशः पालनं न करोति। सांख्यं हि प्रकृतिपुरुषौ मूले तत्त्वे स्वीकरोति, परन्तु पुराणदृष्ट्या सर्गादावुभावपीमौ परमात्मन एवोत्पद्येते, प्रलयदशायाम् च तत्रैव प्रविलीयेते। तथाचोक्तं विष्णुपुराणेः —

प्रकृतिर्या ममाख्याता व्यक्ताऽव्यक्तस्वरूपिणी।
पुरुषश्चाऽप्युभावेतौ लीयेते परमात्मनि।।
परमात्मा च सर्वेषामाधारः परमेश्वरः।
विष्णुनामा स देवेषु वेदान्तेषु च गीयते।।[1]

एवं सांख्यदर्शनमाधारम्मन्यमानापि पौराणिकी सृष्टिर्नैजं वैशिष्ट्यं विभ्राणाऽलौकिकता—मण्डितैवाऽस्ति इत्यत्र नास्ति कश्चन सन्देहलेशः।

पुराणानि सन्ति भारतीयसंस्कृतेः समस्तानां विद्यानामाकरस्वरूपाणि। तत्र स्थाने—स्थाने प्रसङ्गवशाद् दार्शनिकतत्त्वानामपि विवेचनं सरलया सरण्या प्रस्तुतमस्ति। पुराणान्यनेकैरुपैर्या समानस्य प्रपञ्चस्य मूले एकस्य सर्वशक्तिसम्पन्नस्य सर्वैश्वर्यसनाथस्य तत्त्वस्य सत्तां स्वीकुर्वन्ति, येन समस्तमिदं विश्वं व्याप्तमस्ति। तदेव तत्त्वं विष्णुनारदीयपुराणेषु भगवान् विष्णुः श्रीमद्भागवतब्रह्मवैवर्तादिपुराणेषु भगवान् श्रीकृष्णः, वायुकूर्मशिवस्कन्दादिपुराणेषु शिवः, देवीभागवतमार्कण्डेयादिपुराणेषु च शक्तिरस्ति। आत्मज्ञानिनांकृते स्यान्नाम भगवतो निर्गुणं स्वरूपं मान्यतमम्, परन्तु साधारण मानवानां कृते तूपास्यदेवस्य सगुणं रुपमेवं

१. *विष्णुपुराणे षष्ठांशे चतुर्थाऽध्याये, श्लोक ३९—४०।*

पुराणानुसारमुपादेयं ग्रहणीयं स्पृहणीयं मान्यतमं चाभिमतमस्ति। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "अपाणिपादो जवनो ग्रहीता:" "पश्यत्यचक्षु: स श्रृणोत्मकर्ण:"। इत्यादिना वेदेष्वग्राह्यरुपेण वर्णितं निराकारं भागवते सगुणरूपेणाविर्भूय प्रत्यक्षगोचरी भवति –

तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम्।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोद सौभगम्।।
महार्ह वैदूर्य किरीटकुण्डलत्विषा परिष्वक्त सहस्रकुन्तलम्।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत।।[१]

यत्र वेदेषु ब्रह्म एकमद्वितीयं निर्गुणं निर्विकल्पं चोपदिष्टमस्ति, तत्र पुराणानि विविधानां देवादीनां च सगुणोपासनां स्वीकृत्य सर्वेषां गौरवं गायन्ति। विभिन्नादर्शनेषु जगत्कर्तृत्वरूपं विभिन्नमभिमतमस्ति। यथा न्यायदर्शनं वैशेषिकदर्शनञ्चेश्वरं जगत्कर्त्तारि– मङ्गीकुरुत:। योगदर्शनं सेश्वरसांख्यञ्च पुरुषविशेषमेव संसारोत्पादकं स्वीकुरुत:। निरीश्वर सांख्यमते प्रकृतिरेव कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेप:। वेदान्तदर्शनं तु ब्रह्मण एव विवर्तं जगदिति मनुते। पुराणाऽनुसारेण मूलतत्त्वनाम्नो भिन्नत्वेऽपि तस्य मौलिकस्वरूपे भेदो नास्ति, तत्त्वविदो वेदान्तदर्शनस्याद्वयं ब्रह्म, श्रीमद्भगवद्गीतायां पुरुषोत्तम:, श्रीमद्भागवतस्य श्रीकृष्णश्चैकमेव परमं तत्त्वमस्ति। तथाचोक्तं श्रीमद्भागवते: –

वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमव्ययम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।।[२]

भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यस्ति वास्तविकं सुखकरं तत्त्वम्। तदुपलब्धये श्रीमद्भागवते भगवता श्रीकृष्णेनोद्धवाय प्रधानतया त्रीणि साधनानि निर्दिष्टानि – ज्ञानं–भक्ति:–निष्कामकर्म च। तथाहि: –

१. श्रीमद्भागवते दशमस्कन्धे तृतीयेऽध्याये, श्लो. ९–१०।
२. श्रीमद्भागवते प्रथमस्कन्धे द्वितीयेऽध्याये, श्लो. ११।

योगस्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपयोन्योऽस्ति कुत्रचित्।।[1]

अत्र ज्ञानपदेन निःश्रेयसाधिगमाय साधनभूताः सर्वेऽपि ज्ञानप्रकारा गृह्यन्ते। कर्मपदेन कैवल्योपलब्धये कर्मकाण्डान्तर्गताः सकलाः प्रकाराः स्वीक्रियन्ते। भक्तिपदेन च श्रवणकीर्तनप्रभृतयो निखिलाः प्रकारा अभिप्रेयन्ते। तथा च भुक्तिमुक्तिदानां दर्शनभेदेन प्रोक्तानां समेषामुपायानां संग्रहोऽत्र विद्यते एव। शिवपुराणस्योमा संहितायामपिः –

ज्ञानयोगः क्रियायोगः भक्तियोगस्तथैव च।
त्रयोमार्गः समाख्याताः श्रीमातु भुक्तिमुक्तिदाः।।[2]

इत्थं यावज्जीवं धर्मफलानां सात्त्विकभावेन मुक्तिः तथा कर्मफलानां भोगेन समाप्तौ मुक्तिरेव जीवानां मुख्यफलमस्ति।

## (२) कर्मकाण्डोपासनाविधिः

हे सात्वतां यदूनां श्रेष्ठ! भगवन् श्रीकृष्ण! यस्मादित्यत्र ल्यब् लोपे पञ्चमी यमाश्रित्येति भावः। ये भक्ता यथा त्वां पूजयन्ति तथा हे प्रभो! भवदाराधनं क्रियायोगं कथय। नारदादयो मनुयो नृणां नृभिमुहुर्मुहुरनुष्ठितं भवदाराधनं मुक्तिसाधनं वदन्ति, भगवान् व्यासस्तथाऽऽङ्गिरसः सुतः आचार्यो मम गुरु बृहस्पतिरपि एतद् भवदाराधनमेव मुक्तिसाधनं वदति। ते मुखकमलान्निसृतं यद् भगवान् ब्रह्मा भृग्वादिभ्यः पुत्रेभ्य आह, भगवान् शङ्करोऽपि देव्यै पार्वत्यै आह। एतद् सर्ववर्णानां आश्रमाणां स्त्रीशूद्रादीनां सम्मतमस्ति तथा धर्मादीनामुत्तमं साधनमस्ति इत्यहं मन्ये। हे मानद! हे कमलनयन! हे विश्वेश्वराणां ब्रह्मादीनामपि नियामक। कर्मबन्धविमोचनं एतत् श्रद्धालवे भक्ताय मे कथयेति उद्धवेन पृष्टः श्रीभगवानाहः –

---

१. *श्रीमद्भागवते एकादशस्कन्धे २० अध्याये, श्लोक ६।*
२. *श्री शिवपुराणस्योमासंहितायाम् ५१ अध्याये, श्लोक ७।*

हे उद्धव! नास्ति अन्त: शास्त्रत: पारं अनुष्ठानं यस्येवं भूतस्य कर्मकाण्डस्य अनुपूर्वश: क्रमेण अङ्गोपाङ्गादिक्रमेण संक्षेपेणाहं त्वदग्रे वर्णयिष्यामि वर्णयामि वर्तमानार्थेऽत्र भविष्यत्प्रयोग:। वैदिक: पाञ्चरात्रोक्त: न्यासप्रधानपूजा वा ताभ्यां मिश्रश्च मे त्रिविधा पूजा प्रकीर्तिता। त्रयाणां मध्ये वाञ्छितेन विधिना मां पूजयेत्। यदा "अष्टवर्षं ब्राह्मणमुपनयेत्" इति वेदप्रतिपादितेन विधिना उपनयनं प्राप्य मनुष्यो येन प्रकारेण भक्त्या श्रद्धया च मां पूजयेत् तान् मत्तो जानीहि। प्रतिमायां भूमौ अग्नौ सूर्ये जलेषु वा निष्कपटेन गन्धपुष्पादिना स्वगुरुं माम् पूजयेत्। शरीरशुद्ध्यर्थं आदौ कृतदन्तधावन: मृद्ग्रहणादिना वैदिकतान्त्रिकमन्त्रै: स्नानं करणीयम्। संकल्पो देशकालादिकीर्तनलक्षण:[१] वेदविहितानि सन्ध्योपासनादि कृत्वा तै: सह कर्मबन्धनमोचिनीं मम पूजां कुर्यात्। पाषाणमयी—काष्ठमयी—स्वर्णादिमयी, चन्दनादिमयी, चित्रपटमयी—मनोमयी—मणिमयीभेदेन मदीया प्रतिमा अष्टधा स्मृता:। प्रकर्षेण तिष्ठति देवोऽस्यामिति प्रतिष्ठा प्रतिमेति भाव सा चलाऽचलेतिभेदेन द्विधा, जीवयति चेतयति इति जीव ईश्वरस्तस्य मन्दिरं निवासस्थानं कार्यमितिभाव:। हे उद्धव! स्थिरायां प्रतिभायां आवाहनं विसर्जने न भवत: तदप्यर्चनकाले।[२]

१. *संकल्पस्यावश्यकत्वं यथा – संकल्पं च सदा कुर्यात् स्नानदानव्रतादिषु।*
*अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि।।* —*(मार्कण्डेयोक्ते:)*

२. *उद्धव उवाच: –*
*क्रियायोगं समाचक्ष्व भवदाराधनं विभो!। यस्मात्त्वां ये यर्थार्चन्ति सात्वता: सात्वतर्षभ!।।*
*एतद् वदन्ति मुनयो मुहुर्नि:श्रेयसं नृणाम्। नारदो भगवान् व्यासो आचार्योऽङ्गिरस: सुत:।।*
*नि:सृतं ते मुखाम्भोजात् यदाह भगवानज:। पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भव:।।*
*एतद् वै सर्ववर्णानामाश्रमाणां च सम्मतम्। श्रेयसासुत्तमं मन्ये स्त्रीशूद्राणाञ्च मानद!।।*
*एतत् कमलपत्राक्ष! कर्मबन्धविमोचनम्। भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर!।।*
*श्रीभगवानुवाच: –*
*न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धवं!।। संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वश:।।*
*वैदिकास्तान्त्रिको मिश्र इति मे त्रिविधो मख:। त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्।।*
*यदा स्वनियमेनोक्तं द्विजत्वं प्राप्य पुरुष:। यथा यजेत मां भक्त्या श्रद्धया तन्निबोधमे।।*
*अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे। द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुंमाम यथा।।*
*पूर्वं स्नानं पृष्कुर्वीत धौतदन्तोङ्गशुद्धये। उभयैरपि च स्नानं मन्त्रैर्मृद् ग्रहणादिना।।*
*सन्ध्योपास्यादि कर्माणि वेदेवाचोदितानि मे। पूजां तै: कल्पयेत् सम्यक् संकल्प: कर्मपावनीम्।।*
*शैली दारुमयी लौही लेप्या लेख्या च सैकती। मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता:।।*
*चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम्। उद्वासाऽऽवाहने नस्त: स्थिरायामुद्धवाऽर्चवे।।*
*– श्रीमद्भागवते एकादशस्कन्धे २७ अध्याये, श्लोक १–१३।*

अस्थिरायां सैकतीप्रतिमायां तत्रापि शालग्रामे द्वयं नैव कुर्यात्[1]; आवाहनोद्वासनादिकं विकल्पेन भवति। भूमौ आवाहनोद्वासने भवतः। मृण्मयलेख्यव्यक्तिरिक्तायां प्रतिमायां स्नपनं भवति विलेप्यायां विलेख्यायां दारुमय्याञ्च केवलं मार्जनं क्रियते न स्नपनमितिभावः। सकामस्य प्रसिद्धैर्द्रव्यैः खण्डघृतलड्डूकापूपादिभिः मद्यागः कर्त्तव्यः योगोऽत्र पूजनमिति भावः। अत्र च स्त्वर्थे अर्थात् निष्कामभक्तस्य तु भावेन कल्पनया यथोपपन्नैर्द्रव्यैरेव हृदये मत्पूजनं कर्त्तव्यम्। अर्चायां प्रतिमायां तु शब्देन शालग्रामेऽपि प्रेष्टं प्रकर्षेण इष्टं स्नानालङ्करणमभिमतम् कुत्रचित् प्रेष्ठमित्यपि पाठो विद्यते तत्र अतिशयेन प्रियमिति अभिभूतमस्ति। स्थण्डिले भूमौ तत्त्वानां विन्यासः अर्थात् मन्त्रै तत्तद्देवानां स्थापनं सूर्ये अभ्यर्हणमुपस्थानादि सलिलादिभिस्तर्पणादिभिः पूजनं प्रेष्ठमिति योजनीयम्। श्रद्धया समर्पितं भक्तेन जलमपि अतिशयेन प्रियतमं भवति। यदा तदा गन्धादयः तोषप्रदा भवन्तीति किमु वक्तव्यम्। अभक्तेन चन्दन–धूप–पुष्प–दीप–अन्न–फलाद्यपि अधिकं समर्पितं मे आनन्दाय न भवतीति भावः। प्रागेव सम्पादित पूजासामग्री कृतस्नानः प्राङ्मुख उदङ्मुखो वा आसने आसीनः अथवा प्रतिमायां सम्मुख आसीन विष्णुं पूजयेदिति भावः। अङ्गादिकृतन्यासः संस्थापितां मदीयप्रतिमां निर्माल्या अपसारणेन शोधयेत्। प्रोक्षणार्थोदकपात्रं कलशञ्च चन्दनपुष्पादिभिः संस्कुर्यात्। प्रोक्षणीयजलै पूजास्थानादीनि प्रोक्ष्य त्रीणि पात्राणि पाद्याद्यर्थ अद्भिः पूरयित्वा तत्तद्द्रव्यै संयुक्तं कुर्यात्। यथा पाद्यपात्रे श्यामाकादि, अर्घ्यपात्रे गन्धपुष्पाक्षतादि आचमनपात्रे च लवंगजायफलादि निक्षिपेत्। देशे भगवदादेशे तिष्ठतीति देशिकोऽर्चकः 'ॐ हृदयाय नमः' इति पाद्यस्य, 'ॐ शिरसे स्वाहा' इत्यर्घ्यस्य, 'ॐ शिखायै वषट्' इत्याचमनीयस्य गायत्र्या च हस्तस्पर्शनाभिमन्त्रणं कुर्यात्। पिण्डे यौगिकी क्रियेयं गुरुगम्या दीक्षितानामेव न सर्वसाधारणगम्येतिभावः। अतोऽदीक्षितैः सात्विकभावनया भगवद्ध्यानेनैव पिण्डसंशोधनं कार्यम्। यथा मूलार्थस्त्वित्थम् – वाय्वग्निशब्दौ शोषणदहनपरौ प्लावनस्योपलक्षणम्। तथाहि – वायुना प्राणायामेन शोषणपूर्वकं शोधिते नाभिचक्रस्थेन

१. *शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते।*
*शालग्रामार्चने नैवमावाहनविसर्जने।।* — *(स्कन्दपुराणोक्तेः)।*

अस्थिरायां सैकतीप्रतिमायां तत्रापि शालग्रामे द्वयं नैव कुर्यात्[1]; आवाहनोद्वासनादिकं विकल्पेन भवति। भूमौ आवाहनोद्वासने भवतः। मृण्मयलेख्यव्यक्तिरिक्तायां प्रतिमायां स्नपनं भवति विलेप्यायां विलेख्यायां दारुमय्याञ्च केवलं मार्जनं क्रियते न स्नपनमितिभावः। सकामस्य प्रसिद्धैर्द्रव्यैः खण्डघृतलड्डूकापूपादिभिः मद्यागः कर्त्तव्यः योगोऽत्र पूजनमिति भावः। अत्र च स्त्वर्थे अर्थात् निष्कामभक्तस्य तु भावेन कल्पनया यथोपपन्नैर्द्रव्यैरेव हृदये मत्पूजनं कर्त्तव्यम्। अर्चायां प्रतिमायां तु शब्देन शालग्रामेऽपि प्रेष्टं प्रकर्षेण इष्टं स्नानालङ्करणमभिमतम् कुत्रचित् प्रेष्ठमित्यपि पाठो विद्यते तत्र अतिशयेन प्रियमिति अभिभूतमस्ति। स्थण्डिले भूमौ तत्त्वानां विन्यासः अर्थात् मन्त्रै तत्तद्देवानां स्थापनं सूर्ये अभ्यर्हणमुपस्थानादि सलिलादिभिस्तर्पणादिभिः पूजनं प्रेष्ठमिति योजनीयम्। श्रद्धया समर्पितं भक्तेन जलमपि अतिशयेन प्रियतमं भवति। यदा तदा गन्धादयः तोषप्रदा भवन्तीति किमु वक्तव्यम्। अभक्तेन चन्दन–धूप–पुष्प–दीप–अन्न–फलाद्यपि अधिकं समर्पितं मे आनन्दाय न भवतीति भावः। प्रागेव सम्पादित पूजासामग्री कृतस्नानः प्राङ्मुख उदङ्मुखो वा आसने आसीनः अथवा प्रतिमायां सम्मुख आसीन विष्णुं पूजयेदिति भावः। अङ्गादिकृतन्यासः संस्थापितां मदीयप्रतिमां निर्माल्या अपसारणेन शोधयेत्। प्रोक्षणार्थोदकपात्रं कलशञ्च चन्दनपुष्पादिभिः संस्कुर्यात्। प्रोक्षणीयजलै पूजास्थानादीनि प्रोक्ष्य त्रीणि पात्राणि पाद्याद्यर्थं अद्भिः पूरयित्वा तत्तद्रव्यै संयुक्तं कुर्यात्। यथा पाद्यपात्रे श्यामाकादि, अर्घ्यपात्रे गन्धपुष्पाक्षतादि आचमनपात्रे च लवंगजायफलादि निक्षिपेत्। देशे भगवदादेशे तिष्ठतीति देशिकोऽर्चकः 'ॐ हृदयाय नमः' इति पाद्यस्य, 'ॐ शिरसे स्वाहा' इत्यर्घ्यस्य, 'ॐ शिखायै वषट्' इत्याचमनीयस्य गायत्र्या च हस्तस्पर्शनाभिमन्त्रणं कुर्यात्। पिण्डे यौगिकी क्रियेयं गुरुगम्या दीक्षितानामेव न सर्वसाधारणगम्येतिभावः। अतोऽदीक्षितैः सात्विकभावनया भगवद्ध्यानेनैव पिण्डसंशोधनं कार्यम्। यथा मूलार्थस्त्वित्थम् – वाय्वग्निशब्दौ शोषणदहनपरौ प्लावनस्योपलक्षणम्। तथाहि – वायुना प्राणायामेन शोषणपूर्वकं शोधिते नाभिचक्रस्थेन

---

१. *शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते।*
*शालग्रामार्चने नैवमावाहनविसर्जने।।* — *(स्कन्दपुराणोक्तेः)।*

अग्निना दहनपूर्वकं शोधिते खेचरीमुद्रया ललाटस्थचन्द्रमण्डलाभिनिःसृताऽमृतेन आप्लाविते पिण्डे शरीरे हृत्कमलस्थामण्वीं सूक्ष्मां जीवकलां श्रीनारायणमूर्तिं ध्यायेत्! कीदृशीम् — जीवः कला अंशो यस्यास्ताम्। पुनश्च अश्च उश्च मकारश्च नादो बिन्दुश्च पञ्चमः इत्युक्तेः नादो ध्वनिः तदतिक्रमे सति बिन्दौ आज्ञाचक्रे सिद्धैर्योगेश्वरैर्भावितामनुभूताम्। एषा सम्प्रज्ञातसमाध्यवस्था उच्यते। गीतायाभगवतोक्ता ब्राह्मीस्थितिरपिरयमेव।[1]

चिन्तितया तया मूर्त्या देहे प्रकाशिते सति तन्मयः सन् तां मानसोपचारैः सम्पूज्य पुनः प्रतिमादिषु तामेवाह्य स्थापनमुद्रया संस्थाप्य कृतन्यासं मां पूजयेत्। कथमित्याहः — धर्मादिभिः धर्मज्ञानवैराग्यैश्वर्यैश्चतुर्भिः, विमलोत्कर्षणी ज्ञाना क्रिया योगापह्वी सत्या ईशाना अनुग्रहादिभिर्नवभिः शक्तिभिश्च समासनं कल्पयित्वा अष्टदलं पद्मञ्च कर्णिकाकेसरोज्ज्वलं च कृत्वा वेदतन्त्राभ्यां द्वाभ्यां भुक्तिमुक्तिसिद्धये स्वर्गोऽपवर्गसिद्धये वा मह्यं पाद्यादीन् समर्पयेत्। आचमनमर्ध्यञ्च निवेदयेत्। आयुधादिपूजामाहः — सुदर्शनं — पाञ्चजन्यं — गदादीषुधनुर्हलान् — मुसलं — कौस्तुभं — मालां — श्रीवत्सं — नन्दं — सुनन्दं — गरुडं— प्रचण्डं — चण्डं — महावलं — वलं — कुमुदं — कुमुदेक्षणं — दुर्गां — विनायकं — व्यासं — विष्वक्सेनं — गुरुन् — सुरान् इन्द्रादिलोकपालन् पूर्वाद्यष्टदिक्षु प्रोक्षणपूर्वक—

---

१. *अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम्। स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम्।।*
*द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः। भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि।।*
*स्नानाऽलङ्करणं प्रेष्ठमर्चायामेव तूद्धव!। स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः।।*
*सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः।।*
*श्रद्धयोपाहृतं प्रेष्ठं भक्तेन ममवार्यपि।*
*भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते। गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः।।*
*शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः। आसीनः प्रागुदग्वाऽचेदर्चायामथ सम्मुखः।।*
*कृतन्यासः कृतन्यासां मदर्चां पाणिनाऽऽमृशेत्। कलशं प्रोक्षणीयञ्च यथावदुवसाधयेत्।।*
*तदद्भिर्देवयजनं द्रव्याण्यात्मनमेव च। प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत्।।*
*पाद्यार्घ्याऽऽचमनीयार्थं त्रीणि पात्राणि दैशिकः। हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमन्त्रयेत्।।*
*पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम। अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम्।।*
*— श्रीमद्भागवते एकादशस्कन्धे २७ अध्याये, श्लो० १४—२२।*

—मर्ध्यादिभि: देवस्य सम्मुखे सम्पूजयेत्। उपचारानाह : — चन्दन — खस — कर्पूर — कुङ्कुमागरु सुगन्धितैर्जलै विभवे सति नित्यदा मन्त्रै: स्वर्णधर्मेत्यादि — महापुरुषविद्या जितं ते इत्यादि, पौरुषेण सहर्षशीर्षेत्यादिना, राजनादीनि सामानि इन्द्रं नरो इत्यस्यामृचि गीतानि। आदिशन्देन रोहणादीनि एभिमन्त्रै: स्नापयेत्। वस्त्र—यज्ञोपवीत—अलङ्कार—तुलसीपत्र—माला—गन्धादिलेपनैर्यथोचितम् मद्भक्त: सप्रेम मां सम्भूषयेत्। पाद्यमाचमनीयं, गन्धं — पुष्पाणि अक्षतान् तिलकेन त्वर्चने यतो हि "नाक्षतैरर्चयेद्विष्णुं" इति तन्निषेधात्। धूपदीपनैवेद्यादीनि च श्रद्धया पूजको मह्यं दद्यात्। गुडशब्देन गुडमिश्रितधान्यपदार्था: सामान्यानां कृते। सर्पि: घृतं तल्सिक्तपदार्था:। सूतकेनो सोहनपड़ी प्रभृतय: तथा (पूड़ी—मालपुआ—लड्डू—हलुआ दहीबड़ा) मुद्गपाकादयश्च समृद्धानां कृते क्रमेणार्थै: विभवे सति सम्पादयेत्। उद्वर्तनं उन्मर्दनं दर्पणं दन्तधावनं पञ्चामृतस्नानं अन्नं आद्यञ्च अन्यदपि भक्ष्यं भोक्ष्यं चोष्यं लेह्यं पेयं गीतं नृत्य यत् किञ्चित् अभिप्रेतं तच्चाऽपि पर्वणि उत अपि प्रतिदिनं समर्पयेत्। गृह्यसूत्रेण मेखलागर्तवेदिभिरुपलक्षिते कुण्डे अग्निं निधाय प्रज्वलितमग्निं पाणिना एकत्री कुर्यात्। अथ पुनस्तं दर्भैरावृत्य कुशकण्डिकां कृत्वा ततो यथाविधिमन्वाधानसंज्ञकं कर्म व्याहृतिभि: समित्प्रेक्षणादिरूपं कृत्वा अग्नेरुत्तरतो होमोपयोगिद्रव्याणि निधाय प्रोक्षणीजलेन च प्रोक्ष्य अग्नौ मां चिन्तयेत्। कथं भूतम्? सुवर्णतुल्यं शङ्खचक्रगदाकमलै: शोभितचतुर्वाहुं शान्तं पीताम्बरे, स्फुरन्ति किरीटादीनि यस्य तं श्रीवत्सवक्षसं भ्राजत् कौस्तुभं वनमालिनञ्च।[1]

१. तथाऽऽत्यभूतया पिण्डे व्याप्ते सम्पूज्य तन्मय:। आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत्।।
पाद्योपस्पर्शार्हणादीनुपराचारान् प्रकल्पयेत्। धर्मादिभिश्चनवभि: कल्पयित्वाऽऽसनं मम।।
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम्। उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये।।
सुदर्शनं पाञ्चजन्यं गदादीषुधनुर्हलान्। मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत्।।
नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च। महानले वलं चैव कुमुदं कुमुदेक्षणम्।।
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरुन् सुरान्। स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभि:।।
चन्दनोशीरकर्पूरकुंकुमागुरु वासितै:। सलिलै: स्नापयेन्मन्त्रैर्नित्यदा विभवे सति।।
स्वर्णघर्मानुवाकेन महापुरुषविद्यया। पौरुषेणापि सूक्तेन साममी राजनादिभि:।।
वस्त्रोपवीताभरण पत्रस्रग्गन्धलेपनै:। अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम्।।
पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान्। धूपदीपोपटीयाणि दद्यान्मे श्रद्धयाऽर्चक:।।
शुद्धपायससर्पींषि शष्कुल्यापूपमोदकान्। संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत्।।
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम्। अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम्।।
विधिना विहिते कुण्डे मेखलागर्तवेदिभि:। अग्निमाधाय परित: समूहेत् पाणिनोदितम्।।
परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि। प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम्।।
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाभुजै:। लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम्।।
स्फुरत्किरीटकटक कटिसूत्र वराङ्गदम्। श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमाजिनम्।।
— श्रीमद्भागवते एकादशस्कन्धे २७, अध्याये, श्लोक २३—३९।

उपर्युक्त प्रकारेण मां चिन्तयन् धृतेन संसिक्तानि समिधः अग्नौ प्रक्षिप्य धृतक्षरणरुपौ आज्यभागौ दत्वा आज्यप्लुतं हविः अष्टाक्षरेण जुहुयात्। षोडशऋचो यस्मिन् तेन तथा पुरुषसूक्तेन च अवदानतः पृथक् पृथक् आहुतिग्रहणेन तृतीयार्थेऽत्र तसिः। अवदीयते खण्ड्यते इत्यवदानं भेदस्तेन। तथा यथान्यायं पूजाक्रमेण स्वाहान्तैर्नाममन्त्रैः अग्नये स्विष्टकृते स्वाहा इति स्विष्टकृतं च जुहुयात्। सम्पूज्य प्रणम्य च नन्दादिभ्यः पार्षदेभ्यो बलिं दद्यात्। नारायणात्मकं ब्रह्म स्मरन् मूलमन्त्रं जपेत्। अन्ते आचमनं दत्वा विष्वकसेनाय पार्षदाय नैवशेषं समर्पयेत्। ततो मुखशुद्ध्यर्थं सुगन्धयुतं ताम्बूलाद्यं समर्प्य पुनः पूजयेत्। मम चरितानि कथयन् कीर्तयन् नृत्यं कुर्वन् आविष्कुर्वन् मुहूर्तं यावद् "क्षणमुद्धव उत्सवः" इति वचनात् क्षणेनोत्सवेन दीव्यतीति उत्सवमग्नो भवेत्। अथवा क्षणोऽस्यास्तीति क्षणिको मत्वर्थीयष्ठक्। क्षणयुक्तो भवेदिति भावः। ततो वृहद्भिर्लघुभिश्च पौराणैः प्राकृतैः स्तोत्रै र्मां स्तुत्वा हे भगवन्! मयि प्रसन्नो भवेति दण्डवत् प्रणमेत्। परस्परं प्रसारिताभ्यां बाहुभ्यां सहितं मूर्द्धानं मम चरणयो र्निधाय हे भगवन्! मृत्युरेव ग्रहो ग्राहो यस्मिन् ससंसार एव सागरस्तस्माद्भयभीतमत एव शरणागतं माम् रक्ष। इत्थं मदर्थ समर्पितं निर्माल्यं आदरपूर्वकं शिरसि धृत्वा प्रतिमास्थं ज्योतिरुद्वासनीयं चेत् तर्हि अंतरात्मनि विसर्जयेत्। यस्मिन् काले यत्र श्रद्धा उत्पद्येत तदा तत्र प्रतिमादिषु न केवलमधिष्ठाने एव पूजयेत् अपि सर्वत्रैव अर्हयेत् यतो हि अहं सर्वप्राणिषु सर्वात्मनि च सर्वात्मारूपरूपेणाहमेव विद्यमानोऽस्मिं इति भावः। एवं वैदिकैस्तांत्रिकैश्च कर्ममार्गैर्मनुष्यो मां पूजयन् इह लोके परलोके च मत्तो मनोवाञ्छितां सिद्धिं लभते। मन्मूर्तिं प्रतिष्ठाप्य अर्चायामोत्सवाश्रितान् मनोहराणि निष्कुटानि दृढं देवालयञ्च निर्मापयेत्। पर्वसु प्रतिदिनं वा पूजायात्रोत्सवादीनां निर्वाहार्थं क्षेत्रापाणपुरग्रामान् मह्यं समर्प्य सत्समानैश्वर्यं प्राप्नुयात्। प्रतिष्ठया चक्रवर्तित्वं मन्दिरनिर्माणेन त्रिलोकपतित्वं पूजादिना च मत्साम्यतां लभेत्। एवं मां यो पूजयते स निष्कामकर्मणा भक्तियोगं लभते भक्तियोगेन माञ्च लभते। यश्च ब्राह्मणानां देवानाञ्च स्वदत्तां परदत्तां वृत्तिं हरेत स दशकोटीः वर्षं यावत् विष्ठाभोजी कृमिर्जायते। कर्तुर्यत् फलं तदन्येषामपि भवतीत्याहः — कर्तुः

प्रेरकस्यानुमोदकस्य च मरणानन्तरं तदेवफलं भवतीति भावः। यतस्ते कर्मणां फलभागिनः तत्रापि भूयसि कर्मणि सवसारभ्यादौ भूयोदिकं फलं भवतीति भावः।[1]

## (3) तत्त्वचिन्तनम्

भूतानि भावयति सृजतीति हे भूतोत्पादक! हे पूर्वज् हे देवदेव! तुभ्यं नमोऽस्तु। आत्मतत्त्वस्य ज्ञापकं यज्ज्ञानं ज्ञानसाधनं शास्त्रं ज्ञापय। इदं विश्वं यत्प्रकाश्यं, यदाधारकं, यदात्मकं च तत्त्वं तस्य याथार्थ्यं तत्त्वतो वदेति नारदेन षट् प्रश्नाः कृताः। भूतभविष्यद्वर्तमानानां ज्ञातो भवान् एतत् सर्वं भवान् जानाति। यतो हि एतद् विश्वं विज्ञानेन करे आमलकवद् अथवा हस्ते स्वच्छं जलमिव निश्चितमस्ति। किञ्च त्वं यतो विज्ञानवानसि यदधीनोऽसि, यदात्मकोऽसि, यदाश्रयोऽसि इति पुनः चत्वारो प्रश्नाः कृताः। आत्मशक्तिमाश्रित्य लूताकीट इव श्रमरहितः अन्ततः पराभवं अप्रापयन् आत्मनि भूतानि सृजसि, पालयसि, संहरसि च। अस्मिंल्लोके त्वत्तः उत्कृष्टं निकृष्टं समं मध्यमं, सत्—असत्, स्थूलं—सूक्ष्मं यत्किञ्चित् प्रतीयमानमस्ति तत् सर्वं त्वत्त एव नान्यत् इत्यहं जानामि। एवं महिमावान् भवान् सावधानः कठिनं तप आचरति तेन तपसा त्वं अस्मान् पीड्यसे तथेश्वरान्तरस्यं

---

१. ध्यायन्नभ्यर्च्य दारुणि हविषाभिघृतानि च। प्रास्थाज्यभागावधारौ दत्वा चाज्यपुतं हविः।।
जुहूयान्मूलमन्त्रेण षोडशार्चवदानतः। धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः।।
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत्। मूलमन्त्रं जपेद् ब्रह्म स्मरन् नारायणात्मकम्।।
दत्त्वाऽऽचमनमुच्छेषं बिम्बक्सेनाय कल्पयेत्। मुखवासं सुरभिमत् ताम्बूलाद्यमथाहरेत्।।
उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम। मत्कथाः श्रावयन् शृण्वन् मुहूर्तं क्षणिको भवेत्।।
स्तवैरुच्चावचै स्तोत्रैः पौराणैः प्राकृतैरपि। स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत्।।
शिरो मत्पादयोः कृत्वा बाहुभ्याञ्च परस्परम्। प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्।।
इति शेषां मया दत्तां शिरस्याधायसादरम्। उद्वासयेच्चेदुद्वास्यं ज्योतिज्योतिषि तत् पुनः।।
अर्चादिषु यदा 'यत्र श्रद्धा मां तत्र चार्चयेत्। सर्वभूतेष्वात्मनि च सर्वाऽऽत्माऽहमवस्थितः।।
एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः। अर्चनुभयतः सिद्धिं मनो विन्दत्यभीप्सिताम्।।
मदर्चां सम्प्रतिष्ठाय मन्दिरं कारयेद् दृढम्। पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान्।।
पूजादीनां प्रवाहार्थं महापर्वस्वयान्वहम्। क्षेत्रापणपुरग्रामान् दत्वा मत्सार्ष्टितामियात्।।
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्। पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतापियात्।।
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति। भक्तियोगं स लभते एवं यः पूजयेत माम्।।
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः। वृत्तिं स जायते विड्भुक् वर्षाणामयुतायुतम्।।
कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च। कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम्।।
— श्रीमद्भागवते एकादशस्कन्धे २७ अध्याये, श्लोक ३९/५४।

शङ्काश्चोत्पादयसि। हे सर्वज्ञ! हे सकलेश्वर! एतत् सर्वं पृच्छतो मे ज्ञापय, येन भवता शिक्षितोऽहं सर्वमिदं जानीयामो वयमितिभावः।[१]

ब्रह्मोवाचः – यस्य वासुदेवस्य अजेयया मायया जना मां जगद्गुरुर्मिति वदन्ति, तस्मै भगवते वासुदेवाय वयं नमस्कुर्महे। यस्य वासुदेवस्य दृष्टिपथेऽग्रे भवितुं विलज्जमानया अमुया मायया भ्रष्टबुद्धयो विमोहिता जना ममाहमिति आत्मानं श्लाघन्ते। द्रव्यं भूतानि, शुभाऽशुभ कर्म, कालो गुणक्षोभकः स्वभावस्तत्परिणामहेतुः जीवो कर्मफलभोक्ता, अन्योऽपि अनुक्त, सर्वोऽपि पदार्थे वस्तुतो वासुदेवाद्भिन्नो हे ब्रह्मन्! पृथग् नास्ति। एतेनोत्तरेण पूर्वोक्त प्रश्नानामुत्तरमुक्तं भवति। वेदास्तदङ्गजा देवा, लोका, मखा, योगस्तपो ज्ञानं, मोक्षादयो नारायणमयाः सन्ति। तस्यान्तर्यामिणोऽखिलात्मन्त कूटस्थस्येशस्य दृष्ट्या प्रवर्तितोऽहं ब्रह्मातेनैव सृष्टः सृज्यं तत् सृष्टमेव सृजामि।[२]

---

१. *नारद उवाचः –*
*देवदेव नमस्तेऽस्तु भूतभावन पूर्वज!। तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम्।।*
*यद्रूपं यदधिष्ठानं यतः सृष्टमिदं विभो!। यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः।।*
*सर्वमेतद् भवान् वेद भूतभव्यभवत्प्रभुः। करामलकवत् विश्वं विज्ञानाऽवसितं तव।।*
*यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः। एकः सृजसि भूतानि भूतैरेवात्ममायया।।*
*आत्मन् भावयसे तानि न पराभावयन् स्वयम्। आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाऽक्लमः।।*
*नाहं वेद परं ह्यस्मिन्नापरं न समं विभो!। नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः।।*
*सभवानचरद्घोरं यत्तपः सुसमाहितः। तेन खेदयसे नस्त्वं पराऽशङ्कां प्रयच्छसि।।*
*एतन्मे पृच्छतः सर्वं सर्वज्ञ सफलेश्वर!। विजानीहि यथैवेदमहं बुद्ध्येऽनुशासितः।।*
*ब्रह्मोवाचः –*
*तस्मै नमो भगवते वासुदेवाय धीमहि। यन्मायया दुर्जयया मां ब्रुवन्ति जगद् गुरुम्।।*
*विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहित! विकत्थन्ते ममाऽहमिति दुर्धियः।।*
*द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। वासुदेवात् परो ब्रह्मन्न चान्योऽस्ति तत्त्वतः।।*
*नारायणपरा वेदा देवा नारायणाङ्गजाः। नारायणपरा लोका नारायणपरा मखाः।।*
*नारायणपरो योगो नारायणपरं तपः। नारायणपरं ज्ञानं नारायणपरा गतिः।।*
*तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः। सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः।।*
*—(श्रीमद्भागवते, द्वितीये स्कन्धे, पञ्चमाऽध्याये, श्लोकः १–८।*
*श्रीमद्भागवते द्वितीये स्कन्धे पञ्चमाऽध्याये, श्लोकः १२–१७।*

२. *श्रीमद्भागवते द्वितीये स्कन्धे पञ्चमाऽध्याये, श्लोकः १२–१७।*

निर्गुणस्य परमात्मनः सत्त्वं रजस्तम इति त्रयोगुणाः सन्ति, ते गुणाः सृष्टिस्थितिसंहारेषु विभोर्मायया स्त्रीकृताः सन्ति। गुणा अप्रधानरूपा अत उत्तरपद्यस्य गुणपदेन न पुनरुक्तिः। अर्थात् भूतदेवतेन्द्रियकारणभूता गुणा कार्यकारणकर्तृत्वे शरीरित्वे इन्द्रियत्वे देवत्वे च तत्तदभिमानत्वे नित्यदा मुक्तमपि मायया प्रभावितं पुरुषं आवृण्वन्ति। स एषोऽधोक्षजो भगवान् त्रिभिरावरकैर्गुणैः सुष्ठु अलक्षिता गतिर्यस्य अभक्तैरिति भावः स्वभक्तैस्तु लक्षिता गतिर्यस्य स हे नारद! एवंभूतो भगवान् सर्वेषां मम चेश्वरो विद्यते। स मायेशो भगवान् निजया मायया विविधं भवितुमिच्छुः स्वेच्छया आत्मनि अभिव्यक्तं गुणक्षोभकं कालं कर्म तत्परिणामहेतुञ्च स्वीकृतवान्। पुरुषाधिष्ठितात् कालात् स्वभावात् कर्मणश्च क्रमेण व्यतिकरः क्षोभः साम्यत्यागः परिणामभूतमहत्तत्वस्य जन्म अभूत्। सत्त्वेन वर्धितात् महत स्तमः प्रधानो यः स भूतदेवतेन्द्रियरूपोऽहङ्कारोऽभवत्। सोऽहङ्कारो भूतदेवतेन्द्रियकारणभूतो विगतः कारो विक्षेपो यस्मात् सविकारः सत्त्वमिति भावस्तेन चरति प्रवर्तते वैकारिक तैजस तामसभेदेन विकुर्वन् त्रिधा सम्भूत्। सोऽहङ्कारो द्रव्यशक्ति–क्रियाशक्तिरुपेण विख्यातो जातः। भूतादेर्विकुर्वाणात्तामासादहंकारान्नभोऽभूत् तस्य नभसो मात्रागुणः शब्दो विद्यते। यत् शब्दस्वरूपं द्रष्टृदृश्ययो रुभयोरपि बोधकमस्ति। नभसो विकुर्वाणात् स्पर्शगुणयुतोऽनिलोऽभूत् नभसोन्वयात् शब्दवांश्चाभूत् सोऽनिलः प्राणरुपस्तथा ओज इन्द्रियशक्ति सहो मनः शक्तिस्तथा बलं देहशक्तिस्तासां हेतुरप्यभूत्। विकुर्वाणात् वायोरपि कालकर्मस्वभावतो रुपवत् स्पर्शवत् शब्दवच्च तेजो (अग्निः) समजायत्। विकुर्वाणात्तेन सो रसात्मकं रुपवत् स्पर्शवत् तथा वायोः सम्बन्धाच्च शब्दवदम्भोऽभवत्। विकुर्वाणादम्भसो तेजसः सम्बन्धात् रसस्पर्शरुप–गुणान्वितः गन्धवान् विशेषोऽभवत्। सर्वभूतगुणधारणेन विशेष इति पृथिव्या नाम साऽभवदिति भावः। सात्त्विकादहङ्कारान्मनो जज्ञे दिग्वातार्क प्रचेतोऽश्वि वह्नीन्द्रोपेन्द्रमित्रकादश देवा अपि

जज्ञिरे। तामसाऽहङ्कारयत् ज्ञानशक्तिर्बुद्धिः क्रियाशक्तिः प्राणस्तथा श्रोत्र त्वग् घ्राण जिह्वा वाग् दोर्मेढाङ्घ्रिपाय्वादीनि दशेन्द्रियाणि चाभवन्।[1]

हे नारद! यदा एते अमिलिता भूतेन्द्रियमनोगुणा भावा ब्रह्माण्डस्य निर्माणे न समर्था बभूवुः। तदा ते भगवच्छक्त्या प्रेरिता परस्परं मिलित्वा स्थूलसूक्ष्मभावं गृहीत्वा स्थूलसूक्ष्मरुपं ब्रह्माण्डं रचयामासुः। वर्षसमूहसहस्रान्ते उदकस्थं ब्रह्माण्डं जीवयति इति जीवः परमात्मा अचेतनं ब्रह्माण्डं अचेतयत्। सहस्रोर्वोङ्घ्रि वाह्वक्षः सहस्राऽऽननशीर्षवान् स एव पुरुषस्तदण्डं निर्भिद्य तस्मादण्डात् पृथक्स्थितो जातः। इह ब्रह्माण्डे यस्य पुरुषस्यावयवैर्विद्वांसः कट्यादिभिः अधः अतलादीन् सप्त तथा जघनादिभिरुर्ध्वं भूरादीन् सप्तेत्थं चतुर्दशलोकान् कल्पयन्ति। एतस्य पुरुषस्य भगवतो मुखं ब्रह्मणः बाह्वः क्षत्रिय ऊर्वोर्वैश्यः पद्भ्यां शूद्रोऽभ्यजायत्। अस्य पुरुषस्य पद्भ्यां भूर्लोको नाभितो भूवर्लोको

---

१. सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः। स्थिति सर्ग निरोधेषु गृहीता मायया विभोः।।
कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः। वध्नन्ति निरयदा मुक्ते मायिनं पुरुषं गुणाः।।
स एव भगवाल्लिङ्गैस्त्रिभिरेभिरधोजक्षः। स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः।।
कालं कर्म स्वभावं च मायेशो मायया स्वया। आत्मन् यद्दच्छया प्राप्तं विवुभूषुरुपाददे।।
कालाद् गुणव्यतिकरः परिणामः स्वभावतः। कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत्।।
महतस्तु विकुर्वाणाद्रजः सत्त्वोपबृंहितात्। तमः प्रधानस्त्यभवत् द्रव्यज्ञानक्रियात्मकः।।
सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत्त्रिधा। वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा।।
द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो।।
तामसादपि भूतादेर्विकुर्वाणाद्भूत्नभः। तस्य मात्रा गुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः।।
नमसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः। परान्वयाच्छब्दयोश्च प्राण ओजः सहो बलम्।।
वायोरपि विकुर्वाणात्कालकर्मस्वभावतः। उदपद्यत तेजो वै रुपवत्स्पर्शशब्दवत्।।
तेजसस्तु विकुर्वाणादम्भसो गन्धवानभूत्। परान्वयाद् रसस्पर्शशब्दरुपगुणान्वितः।।
वैकारिकान्मनो जज्ञे देवा वैकारिका दश। दिग्वातार्क प्रचेतो श्विह्नीन्द्रोपेन्द्र मित्रयकाः।।
तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्। ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तेजसौ।।
श्रोत्रं त्वाग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः।।
— (श्रीमद्भागवते, द्वितीये स्कन्धे ५ अध्याये, श्लोकः १८—३२)।

हृदा स्वर्लोकस्तथोरसा महर्लोकः, ग्रीवायां जनलोकः स्तनद्वयात्[१] तपोलोको मूर्धभिः सनातनसत्यलोको ब्रह्म तस्य विभोः कट्यामतलं ऊरुभ्यां वितलं जानुभ्यां सुतलं जङ्घाभ्यां शुद्धं तला तलं गुल्फाभ्यां महातलं प्रपदाभ्यां रसातलम् पादतलतः पातालं इति सर्वलोकमयः पुमानभूत्। चतुर्दशलोकपक्षमाह तत्कट्यामिति। त्रिलोकपक्षमाह पदभ्यां भूर्लोको नामितो भुवर्लोकस्तथा मूर्ध्ना स्वर्लोक इति लोककल्पना जाता।[२]

अधिकं किं वर्णयामो वयम्। तस्मिन्नारायणे इदं समस्तं विश्वं अधिष्ठितमस्ति। स एव निर्गुणः परमात्मा त्रिशक्तिधर्ता भूत्वा सृष्ट्यादौ गृहीतमायोरुगुणः सन् वर्तते। तेन नियुक्तोऽहं विश्वं सृजामि तद्वशीभूतो हरोऽपि विश्वं हरति। विष्णुरुपेण स एव विश्वं परिपाति च। हे तात्! यथा त्वं पृच्छसि सभेदं मया तवाग्रे कथितम्। भगवतो नारायणादन्यत् किमपि सदसदात्मकं सृज्यं नास्ति। तस्य भगवतो परमार्थस्वरूपं नाऽहं वेद नयूयं वेत्थ,

१. यदेतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः। यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम!।।
तदा संहत्य चान्योऽन्यं भगवच्छक्तिचोदिताः। सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः।।
वर्षपूगसहस्रान्ते तदण्डमुदकेशयम्। कालकर्म स्वभावस्थो जीवोऽजीवमजीवयत्।।
स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः। सहस्रोर्वङ्घ्रि बाह्वक्षः सहस्राऽऽननशीर्षवान्।।
यस्येहाऽवयवैर्लोकान् कल्पयन्ति मनीषिणः। कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः।।
पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः। ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत।।
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः। हृदा स्वर्लोक उरसा महर्लोको महात्मनः।।
ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात्। मूर्धभि सप्तलोकस्तु ब्रह्मलोकः सनातनः।।
तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः। जानुभ्यां सुतलं शुद्धं जङ्घाभ्यान्तु तलातलम्।।
महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्। पातालं पादतलत इति लोकभयः पुमान्।।
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः। स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना।।
— श्रीमद्भागवते द्वितीयस्कन्धे, ५ अध्याये, श्लोकः ३२—४२।

२. नाहं न यूयं यदृतां गतिं विदुर्नवामदेवः किमुतापरेसुराः।
तन्मायया मोहितबुद्धयस्त्विदं सवदे विनिर्मितं चात्मसमं विचक्ष्महे।।
यस्याऽवतारकर्माणि गायन्ति ह्यस्मदादयः। न यं विदन्ति तत्त्वेन तस्मै भगवते नमः।।
स एषं आद्यः पुरुषः कल्पे कल्पेसृजत्यजः।
आत्माऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति च पाति च।।
विशुद्धं केवलं ज्ञानं प्रशान्तात्मेन्द्रियाशयाः। यदा तदेवा सत्तकैंसितरोधीयेत विप्लुतम्।।
विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम्। सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्।।
ऋषे विदन्ति मुनयो प्रत्यक् सम्यगवस्थितम्। सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्।।
— श्रीमद्भागवते द्वितीयस्कन्धे, ६ अध्याये, श्लोकः ३६—४०।

भगवान् शङ्करोऽपि न वेद अन्ये देवा अपि न विदुस्तत्र किं वक्तव्यम्। किन्तु तन्मायया मोहितबुद्धित्वात् स्वशक्त्यनुरुपं एव तत्स्वरूपं वयं विद्मः। यस्य भगवतोऽवतार कर्माणि अस्मादयो गायन्ति, किन्तुः परमार्थतो यं न विदन्ति, तस्मै भगवते नमः। स एष आद्यः अजन्मा पुरुषः कल्पे–कल्पे स्वयं स्वेनैन अत्मानं आत्मनि सृजति रक्षति संहरति च। केवलं विशुद्धं ज्ञानस्वरूपं प्रत्यञ्चि जीवे सम्यक् अवस्थितं सत्यं पूर्ण अनादि अनन्तं निर्गुणं नित्यं अद्वयं ब्रह्म, अतीवशान्तशरीरेन्द्रियमनसो मुनयो विदन्ति यदाकुतर्कैराच्छन्नं भवति तदा तन्नानुभूयेत इति भावः।

परस्य भूम्नः परमेश्वरस्याद्योऽवतारः पुरुषो विद्यते अर्थात् प्रकृतीक्षणकर्ता इति भावः। कालादयस्तस्य शक्तयः सन्ति, यथा – स्वभावो तत्परिणामहेतुर्जीवो भोक्ता सदसत् कार्यकारणात्मिका प्रकृतिः, मनः महत्तत्त्वम्, तदादीनि तत् कार्याणि यथा – द्रव्यं भूतानि, विकारोऽहङ्कारः, विराट् समष्टि शरीरम्, स्वराट् वैराजः, स्थास्नु स्थावरं जङ्गमञ्च तस्य व्यष्टिशरीरम् वर्तते। अहं ब्रह्मा भवः शङ्करो यज्ञो विष्णुः एते गुणावताराः दक्षादयः प्रजापतयः विभूतयः सन्ति। किं बहुना स्वर्लोक–खगलोक–नृलोक–तललोकपालाः, ये गन्धर्वविद्याधरचारणेशा यक्षरक्षोरगनागनाथाः ये च ऋषीणामृषभा पितृणाञ्चर्षभाः पुनः लोके देहेन्द्रियमनःशक्ति युतं ह्री श्रीबुद्धियुतं यत् किञ्च वर्तते साकारं निराकारं तत्सर्व अद्भुतार्ण आश्चर्यं वर्णं तत् सर्वं तदेवास्तीतिभावः।[1]

१. *आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च।*
*द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः।।*
*अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च।*
*स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः।।*
*गन्धर्वविद्याधरचारणेशाः ये रक्षयक्षोरगनागनाथाः।*
*ये वा ऋषीणामृषभाः पितॄणां दैत्येन्द्र सिद्धेश्वर दानवेन्द्राः।।*
*अन्ये च ये प्रेतपिशाचभूतकुष्माण्डयादोमृगपक्ष्यधीशाः।।*
*यत्किञ्च लोके भगवन्महस्वदोजः सहस्वद्बलवत्क्षमावत्।*
*श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रुपवद स्वरुपम्।।*
*– श्रीमद्भागवते द्वितीयस्कन्धे ६ अध्याये, श्लोकः ४१–४४।*

अत एवोक्तं यत् अद्वयं ज्ञानं तत् तस्यं ब्रह्मेति, परमात्मेति भगवानिति च कथ्यते तत्तत्त्वं श्रद्धधानो मुनयो विदन्ति।[1]

एवमेव तत्त्ववर्णनं तृतीयस्कन्धे वर्तते। यदा विदुरोमैत्रेयं पृष्ट्वान् यत् – अयं लोकः सुखमाप्तुं कर्माणि करोति किन्तु कर्मभिः सुखं वैराग्यं वा न लभते, किन्तु कर्मत एव दुःखं लभेत अत एवात्र यदुपयुक्तं तन्नः भगवान् कथयेत्। किञ्च निवृत्तव्यापारो यथा स भगवान् समस्तं जगत् निजहृदयाऽऽकाशे निवेश्य राधाशयने शेते स एक एव योगेश्वराणामपीधीश्वर एतद् विश्वं अनुप्रविष्टः यथा बहुधा आसीत्। हे दीनबन्धो मैत्रेय! तस्य परमात्मनः सुखदातुर्हरेः पवित्रकीर्तेः कथासु सारभूतां कथां यथा पुष्पेभ्यो मधुकरेः सारं मकरन्दं निष्काश्य मिष्टं मधु करोति तद्वन् मधुरां कथां कीर्तय। विश्वजन्मस्थिति संयमार्थे कृतावतारः प्रगृहीतशक्तिरीश्वरः यान्यतिपुरुषाणि कर्माणि चकार तान्यपि कथयेति।[2]

हे साधो! त्वया साधुपृष्टमिति विदुरं प्रशंस्य मैत्रेय उवाचः – तवाऽग्रे योगमायया विस्तारिताः विश्वस्य सृष्टि–पालन–संहारप्रयोजनाभगवल्लीलाः क्रमशोऽहं वर्णयामि। आत्मनां जीवानां, आत्मा–आश्रयः, आत्मेच्छाया मायाया अनुगगतो लये सति नानामत्युप्रलक्षणो विभुर्व्यापको भगवान् अग्रे सृष्ट्यादौ एक एवासीत्। स एव द्रष्टा एकराट् जागृतचिच्छक्तिर्दृश्यं

१. वदन्ति तत्तत्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।।
—श्रीमद्भागवते प्रथमस्कन्धे द्वितीयेऽध्याये, श्लोक ११।

२. सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा।।
विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः।।
यथा पुनः स्वे ख इदं निवेश्य शेते ग्रहायां स निवृत्तवृत्तिः।
योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽऽसीत्।।
तदस्य कौषारव! शर्मदातुर्हरेः कथामेव कथासु सारम्।
उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः।।
स विश्वजन्मस्थितिसंममार्थे कृतावतारः प्रगृहीतशक्तिः।
चकार कर्म्माण्यति पुरुषाणि यानीश्वरः कीर्तय तानि मह्यम्।।
– श्रीमद्भागवते तृतीयस्कन्धे, ५ अध्याये, श्लोक १, ६, १५–१६।

नापश्यत् तदा सुप्तशक्तिरात्मानमविद्यमानामिव मेने। स विभुर्व्यापकः यया मायया इदं विश्वं ससर्ज संद्रष्टुरेतस्य परमात्मनः माया नाम्नी सदसदात्मिका शक्तिस्तदिच्छया कार्योन्मुखी जाता। स वीर्यवानधोक्षजः कालशक्त्या गुणमय्यां मायायां आत्मांशेन पुरुषेण वीर्यं चिदाभासं आधत्त धृतवान्। अव्यक्तात् कालरुपपुरुष प्रेरितात् प्रकृतेः सकांशात् विज्ञानात्मा चित्तरुपो यो पदार्थस्तयो नाशकः आत्मस्थं विश्वं प्रकाशयन्नासीत् स एव नाम्ना महत्तत्त्वमभवत्। भगवदृष्टिगोचरो जीवगुणकालाश्रयोऽयं स महानपि अस्य विश्वस्य स्रष्टुमिच्छया आत्मानं आत्मा स्वयं व्याकरोत् रुपान्तरमनयदिति भावः। विकुर्वाणान्महत्तत्त्वाद् भूतेन्द्रियमनो–मयोऽधिभूताधिदैवाध्यात्मिकानाम् कारणभूतोऽहंकारो व्यजायत, अहन्तत्त्वमभूदिति भावः। सात्त्विक राजस तामसभेदेनाहङ्कारोपि त्रिधा वर्तते। विकुर्वणात् सात्त्विकाहङ्कारात् मनोऽभूत्। ये देवास्तेऽपि सात्विकाऽहङ्कारकार्यभूताः येभ्यो देवेभ्योऽर्थानां शब्दादीनां प्रकाशो भवति। राजसाहङ्कारकार्याणि ज्ञानकर्ममयानीन्द्रियाणि जातानि। तामसादहङ्काराद् भूतसूक्ष्मादिः कारणमभूत् यतोभूत् सूक्ष्मेभ्यो आत्मनः शब्दस्य लिङ्गं शरीरं खं आकाशः सञ्जातः। कालमायांशयोगेन भगवद्वीक्षितं नभो जातम्। नभसो समुद्भूतं स्पर्शतन्मात्रं विकुर्वत् अनिलं ससर्ज। नभसोगुणेन शब्देन सहयुक्तो विकुर्वाणोऽनिलोऽपि लोकस्य प्रकाशकं रूपतन्मात्रं ज्योतिः ससर्ज। परवीक्षितं अनिलेनान्वितं विकुर्वज्ज्योति कालमायांशयोगतः रसमयं जलं ससर्ज। ज्योतिषा संयुतं ब्रह्मवीक्षितं विकुर्वदम्भः कालमायांशयोगतः गन्धगुणां महीं ससर्ज। हे विदुर! नभ आदीनां भूतानां तेषां परानुसंसर्गात् यथासंख्यं अवरावरं गुणान् विदुः। कालमायाजीव शरीरिणो विष्णो एतेदेवा कला सन्ति, किन्तु नानात्वात् सर्वे स्वक्रियायामसमर्थाः सन्तः बद्धकरपुटाः प्रोचुः।[1]

१. *साधु पृष्टे त्वया साधो! लोकान् साध्वानुगृह्णता। कीर्तिं वितन्वतालोके आत्मनोऽधोक्षजात्मनः।।
अथ ते भगवल्लीला योगमायोपबृंहिताः। विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः।।
भगवानेक आसेदमग्र आत्मात्मनां विभुः। आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः।।
स वा एष तदा द्रष्टा नापश्यद् दृश्यमेकराट्। मेनेऽसन्तमिवाऽऽत्मानं सुप्तशक्तिरसुप्तदृक्।।
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका। माया नाम महाभाग! ययेदं निर्ममे विभुः।।
श्रीमद्भागवते तृतीयस्कन्धे ५ अध्याये श्लोक १८, २२–३८*

## (४) क्रमिकमुक्तिः

"चतुष्कोशविकाशो जरायुजे"[१]

सहजाऽद्वितीय–स्वाभाविक संस्कारबलेन क्रमशः क्रमाभिव्यक्तिमासादयञ्जीवो यदाण्डजकोटियोनितो जरायुजश्रेण्यां प्रविशति। तदा तत्राऽन्नमय, प्राणमय–मनोमय–विज्ञानमयानां चतुर्ण्णामपि कोशानां विकाशो भवति।

तदेव प्रमाणयति –

"तत्राऽल्पविकाशो बुद्धेः"[२]

यथाण्डजश्रेणीगेषु जीवेषु मनोधर्मप्रोद्भूत्या त्रयाणां कोशानां विकाशस्य प्रमाणमुपलभ्यते, तथैवेहापि जरायुजश्रेणीगेषु जीवेषु बुद्धिधर्मोपलब्ध्या चतुर्ण्णां कोशानां विकाश–प्रमाणमासाद्यते। तत्राश्वहस्तिप्रभृतिजरायुजजीवेषु बुद्धिकृत्यं स्पष्टत एव प्रकाशत इति नास्ति बहुविवृवेरावश्यकत्वम्।

इदानीं पूर्णाऽवयवाऽऽत्यिकां मनुष्ययोनिं वर्णयति : –

"हास्यलक्षणः पञ्चकोशविकाशो मानवे[३]"

मानवे मनुष्ययोनिगे जीवे हास्यलक्षणं चिह्नं यस्य सः तथोक्तः पञ्चानां कोशानां विकाशो ज्ञेयः। मानवे पञ्चकस्यापि विकाशो भवति। यतस्तत्र अन्तिमस्याऽऽनन्दमयकोशस्य कार्यं हास्यात्मकं समुपलभ्यत इति सूत्रार्थः।

दैवराज्यसञ्चालकादेवगणाः क्रमशो जीवान् योनितो योन्यन्तरं प्रापयन्तः स्वाभाविक–संस्कारवशतोऽग्रे सम्वर्द्धयन्तो मानवयोनिं प्रापयन्ति। तत्र च मनुष्ययोनावुयुपेत्य जीवः पञ्चभिः कोशैः परिपूर्णो भूत्वा स्वाधीनो भवति। यतो हि मानवयोनाविह अन्नमयप्राणमय–मनोमय–विज्ञानमयाऽऽनन्दमयानां पञ्चानामपि कोशानां विकाशो भवति। आनन्दस्य हास्यलक्षणं तच्च मनुष्ययोनावेव स्फुटं परिलक्ष्यते। इत्यत आनन्दमयान्तकोशानां मानवयोनौ विकाशो

---

१. कर्म्ममीमांसादर्शने संस्कारपादे सूत्रम् ८५।
२. कर्म्ममीमांसादर्शने संस्कारपादे सूत्रम् ८६।
३. कर्म्ममीमांसादर्शने संस्कारपादे सूत्रम् ८७।

भवतीति सिध्यति। यद्यपि मनुष्येतरप्राणिनामप्यानन्दानुभवो भवत्येव। ते च स्वलाङ्गूल–चालनोत्फलवनादिभिः स्वानन्दाऽनुभवं प्रकाशयन्त्येव। तथापि तेषु प्राणिषु केषुचिदपि हास्यस्य लक्षणन्न परिलक्ष्यते इति मानवयोनावेव पञ्चानामपि कोशानां पूर्णविकाशो भवतीति सर्वसम्मतः सिद्धान्तः।

प्रसङ्गत आनन्दमयकोशस्य पूर्णतारहस्यं प्रतिपादयति : –

"आनन्दमयस्य पूर्णकलौपयिकत्वं चन्द्रवत्"[१]

मानवयोनितः प्राक्तनाऽवस्थायां जीवोऽस्वाधीनः प्रकृतिपराधीनोऽग्रे संसरन् क्रमाभिव्यक्त्या नियमत एवेह मानवयोनौ समुपतिष्ठते। इति पूर्वमेव विवृतम्। चरमस्याऽऽनन्दमयस्वकोशस्याभिव्यक्ति रिहमानवयोनौ स्वत एव भवति। परन्तु आनन्दमयकोशेन सहात्मनः साक्षात् सम्बन्धभागित्वात् तस्य क्रमशः सम्यग् विकाशो जन्मजन्मान्तरेण कलाविकाशसाहाय्येन चन्द्रवज्ज्ञेयः। यथा चन्द्रः प्रतिपदाया आरभ्य क्रमशोऽभिवर्द्धमानः पूर्णिमायां पूर्णकलो भवति। तथैव जीवो मानवयोनौ युगानां जैवसंस्काराणां साहाय्येन उत्तरोत्तरमाध्यात्मिकभूभावाग्रे समेधमानो जन्मजन्मान्तरेण क्रमशः आनन्दमयकोशं परिष्कुर्वन् आनन्दकलां सम्बर्द्धय मोक्षपदमासादयति।

तस्य चरममुदर्कमभिधत्तेः –

"कलाविकाशतः कैवल्यम्"[२]

जीवानामानन्दमयकोशो यावतीम्पूर्णतामासादयति तावदेव स पुष्पवद् विकाश–मासादयति। यावन्तमेव स पोषमासादयति तावत्येव तस्मिन् ब्रह्मानन्दसत्ता प्रकाशते। ब्रह्मानन्दस्य पूर्णसत्ताऽनुभव एव तु कैवल्यं मुक्तिर्बोध्यते।

जीवेषु पूर्वोक्तसंस्कारशुद्धिसाहाय्यतः यावदेव चिद्विलासरूपं ज्ञानं क्रमशः समेधते तावदेव ते बाहुल्येन ब्रह्मानन्दाऽनुभूतिमनुवते। विषयानन्दाऽनुभवोऽपि ज्ञानिनोऽज्ञानिकृताऽनुभवतो

---

१. कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८८।
२. कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ८९।

विलक्षण एव भवतीति स्वीकरणीयमेव। एवमेव ज्ञानवृद्ध्या सह विषयाऽनुभवेऽपि वैलक्षण्यं–समेधते। इत्येवमन्ते स्वाभाविकस्याऽद्वितीयस्य संस्कारस्य क्रमविकाशेन सार्धमानन्दकोश: पूर्णतामधिगच्छति। तस्मिंश्च पूर्णताजुषि स्फुटं विकाशमुपगते सति जीव: सच्चिदानन्दमयस्य स्वस्वरूपस्योपलब्ध्या मुक्तो भूत्वा नन्दति।

कलाविकासभेदानाह: –

"द्विविधस्तद्विकाशो गुणवत्त्वात्"[1]

सत्त्व–रजस्तमस्सु त्रिष्वपि गुणेषु केवलं रज एव सञ्चालकम्। यदा सत्त्वगुणापेक्षि रजो भवति तदा सात्त्विकी क्रिया प्रवर्तते। यदा च तमोगुणापेक्षि भवति तदा तामसी क्रिया प्रचलति। इत्यत एव जीवदेहे मुक्तिप्रदस्य सहजस्य स्वाभाविकस्य संस्कारस्य गतिर्द्विविधा प्रवहति। तत्त्वतस्तस्य संस्कारस्य विकाशो द्विधा विभिन्न: सत्त्वगुणमूलकस्तमोगुणमूलश्च भवति। विज्ञानमिदमन्यथापि बोद्धुं सुशकम् तथाहि – मुक्तिप्रदायी संस्कारो जीवानां सात्त्विकदशायां तामसिकदशायाञ्च साहाय्यमाचरन् जीवांश्चाग्रे सञ्चालयन् कैवल्यपथम्प्रापयति।

विज्ञानमिदमन्यथापि स्पष्टयति: –

"मिथो द्वन्द्वता"[2]

स्थूल–सूक्ष्मात्मिका सर्वाऽपि सृष्टिर्द्वन्द्वमूलिकैवेतिसुनिश्चितम्। यथा बहिर्जगति अहोरात्रद्वन्द्वोऽन्तर्जगति रागद्वेषद्वन्द्व इति सर्वेषामेव प्राकृतिकानां पदार्थानां द्वन्द्वमूलकत्वम्। तत्र द्वन्द्वप्रयोजनमपि सुस्पष्टमेव। तथा हि यदि रात्रिर्नस्यात्तर्हि दिवसस्योपयोगफलत्वन्न प्रतीयते। दिवसाऽभावे रात्रिरपि सुतरामनुपयुक्ता स्यात्। एतद्विज्ञानुरुपं जगतो यावन्त: पदार्था: सन्ति ते सर्वेऽपि द्वन्द्वमूलका:। तदनुसारेण च गुणमूलकानां संस्काराणामपि द्वैविध्यम् सुस्पष्टमेव सिद्ध्यति। तथा चानयोर्द्वयोरपि पारस्पर्य्यं सापेक्ष्यं साहचर्य्यञ्च सुसिद्धम्। वस्तुतस्तु

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ९०।*

२. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् ९१।*

इमौ द्वावपि परस्परं साहाय्यमाश्रितौ प्राकृतिक–गुणपरिणामतो जीवानामभ्युदयकरौ सम्पद्येते इति।

पुनर्विभागमाख्याति: –

"त्रिभावतस्त्रै विध्यम्"[1]

यथा गुणानुसारेण स द्विधा निभक्तस्तथैव भावानुसारेण स त्रिविध: प्रख्यात:। भावाश्चाध्यात्माधिदैवाधिभौतभेदेन त्रिविधा: परिसंख्याता:। प्रकृतिमवलम्ब्य यथा गुणपरिणामो भवति तथैवाऽत्माऽवलम्बेन त्रिभावात्मिकास्तिस्रोऽवस्था अपि प्रकाशीभवन्ति। ताश्च संस्कारजन्या इति नात्र सन्देह:। यतो हि संस्कारा: कर्ममूलानि। संस्कारमूलमन्तरा कापि क्रिया न सम्भवतीति पूर्वमेव प्रतिपादितम्।

यथा च बीजवापमन्तरा न कस्यापि वृक्षस्य प्ररोहस्तथैव संस्कारमन्तरा न कस्या अपि क्रियाया: समुत्पत्ति:। इत्यत: विश्वमिदं यद् गुणाश्रयेण यथा भेदद्वयं तथा भावश्रयेणापि भेदत्रयं भवति।

विकाशमूलका: संस्कारा: गुणसम्बन्धेन द्विविधाभावसम्बन्धेन च त्रिविधा भवन्ति। एतत्स्वरूपपरिज्ञानायेदं पर्याप्तमस्ति यत् –

स्वाभाविक: संस्कारो य एकोऽद्वितीयोऽस्ति, तस्य विकाशकारणस्वरूपा एवेमे भवन्तीति। स्वाभाविकाऽस्वाभाविकयो: संस्कारयोरयं मौलिको भेदोऽवसेयो यद् – अस्वाभाविक: संस्कारो जीवसंकल्पत: समुद्भवात् प्राकृतिकीं स्वाभाविकीं गतिं निरूणद्धि जटिलां वा विदधाति। स्वाभाविकश्च संस्कार: प्रकृति–प्रवाहगतिमधिकतया सरलयति। यतश्च स्वाभाविकसंस्कारबलेनैव जीव: क्रमशोऽग्रे प्रवर्द्धमानो यथोद्भिज्जयोनितो मानवयोनिं यावदायाति तथैवेहापि मनुष्ययोनौ शनै: प्रवर्द्धमानोमुक्तिभूमिमुपतिष्ठति।

१. कर्ममीमांसार्दर्शने संस्कारपादेसूत्रम् १२।

## (3) ३. जीवन्मुक्तिः

सर्वमपीदंमद्वितीयस्य स्वाभाविकस्य संस्कारस्य कार्य्यरूपाया पूर्वोक्ताऽवस्थाया भेदमात्रम्। पूर्णाऽवयवसम्पन्नमानवयोनिगजीवे तु उभयसंस्कारानुसारिण्येव क्रिया प्रचलति। जीवन्मुक्तदशायाञ्च केवलः स्वाभाविक एव संस्कारः कार्य्यकृत् प्रकीर्तित इति विभेदः।

उदाहरणतो यथा मनुष्यजातौ जात्यायुर्भोगा अस्वाभाविकसंस्कारबलेनैवोत्पद्यन्ते। वैदिकाश्चषोडशसंस्कारयज्ञाः स्वाभाविकसंस्कारगतिं प्रकाशयन्तीति पूर्वमेव प्रमाणितम्। स एव मुक्तिप्रदः स्वाभाविकः संस्कार एवं गुणभावसाहाय्यमासाद्य प्रबर्द्धमानो मुक्तिपथं निष्कण्टकं सरलञ्च करोति।

त्रयाणामपि स्वरूपं स्पष्टयितुमाहः –

"त्रिषु वैलक्षण्यम्"[1]

एषां त्रयाणां स्वरूपे किमप्यन्यदेव वैलक्षण्यम्। यतो हि एकं ज्ञानमूलकम्, द्वितीयं कर्ममूलकम्, तृतीयं स्थूलशरीरमूलकम् इति। स्वाभाविकस्य संस्कारस्यानुरूपोऽयं आध्यात्मिकः परिणामः प्रकाशते, स च सर्वभूतानामैक्यसम्पादकत्वान्मुक्तिं प्रदान क्षमत्वाच्च ज्ञानमूलको भवति। आधिदैविको यो हि परिणामः प्रकाशते, तेन क्रमशः कर्तव्यपरायणता–सकामराहित्ययोरधिकार आसाद्यते। आधिभौतिकेन च परिणामेन मलराहित्यं सत्त्वगुण–वर्द्धिकाऽवस्था चाऽधिगम्येते।

एवञ्चासां तिसृणामवस्थानां मध्ये एकाज्ञानमूलिका, द्वितीयाकर्ममूलिका, तृतीया च स्थूलशरीरमूलिकेति परस्परमतिवैलक्षण्यम्।

उभयोराकर्षणोपकरणम्ब्रूतैः –

---

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् १३।*

"रजोवीर्याभ्यामुभयाकृष्टिः"[1]

उभयोः स्वाभाविकाऽस्वाभाविकयोराकृष्टिः आकर्षणं रजश्च वीर्यञ्च ताभ्यां भवतीति सूत्रार्थः। मातापित्रो रजोवीर्य्यसाहाय्येनोभयश्रेणिगाविमौ संस्कारौ समाकृष्येते। तत्र शरीरस्थेषु सप्तषु धातुषु वीर्य्यं हि सर्वोत्तमो धातुः। ते च सप्तापि धातवो मानवदेहे यथाक्रमं समुपलभ्यन्ते। स्त्री काये तु तेषां रूपान्तरं भवतीत्यतः तत्र सप्तमस्य भेदद्वयं समासाद्यते तत्र द्वितीयस्य भेदस्य रज इत्याख्या। एवञ्च स्त्रीकायभेदात् सप्तमस्यापि धातो वीर्यं रजोभेदेन भेदद्वयं भवति। अस्मादेव हेतौरायुर्वेदाचार्यैः स्त्रीकायेऽष्टानां धातूनां स्थितिरङ्गीक्रियते।

मानवानां हि भोगायतनं कर्मार्जननिदानं स्थूलशरीरं मातापित्रो रजोवीर्य्याभ्यां पितॄणां साहाय्येनैव सम्पाद्यते। योगशास्त्रसिद्धान्ततो वायुमनोवीर्य्याणामेकतत्त्वाम्नानेन अन्तःकरणस्य वीर्य्येण सह साक्षात्सम्बन्धभागित्वात् पुरुषाणां नारीणाञ्च वीर्य्यस्य रजसश्च यथाक्रमं सर्वधातुसारतया पूर्वोक्तौ द्वावपि संस्कारौ जीवशरीरे स्वत एव रजोवीर्य्याभ्याकृष्येते।

गुणानां स्थूलशरीरमाधारो भावानाञ्चान्तःकरणमाश्रय इति मातापित्रोर्गर्भाधान—संस्कारकालिक—शरीरान्तःकरणस्थिति—साहाय्यवशेन सन्ताने ते संस्कारसमूहाः समाकृष्यन्ते।

कथमस्वाभाविके संस्कारे स्वाभाविकस्य तस्य समावेश? इत्यादि विविधायाः शङ्कायाः समाधानमाहः — बन्धन, गमागमचक्रयोरस्वाभाविकसंस्कार एव हेतुः। मुक्तिनिदानञ्च स्वाभाविकः संस्कारः। वैदिकाश्च संस्कारयागाः स्वाभाविकसंस्कारपोषका इति प्रागेवाभिहितम्।

इदानीञ्च गुणभावसम्बन्धिनः संस्कारसमूहाः अपि स्वाभाविकस्यैव संस्कारस्याङ्गभूता निगद्यन्ते। अपरञ्च स्वाभाविकस्य संस्कारस्य एकत्वमद्वितीयत्वम् अस्वाभाविकस्य चानन्तत्त्वम्, अपि प्रागेव प्रमाणितम्।

---

१. *कर्ममीमांसादर्शने संस्कारपादेसूत्रम् १४।*

स्वाभाविकस्य संस्कारस्यैकतयाऽद्वितीयतया च तस्य गतिः स्थितिश्च जीवनस्योत्पत्तित आरभ्य मुक्तिं यावत्तिष्ठति इत्यङ्गीकरणीयमेव। स्वाभाविको हि संस्कारः चिज्जडग्रन्थिसमुत्पत्त्या सहैव समुत्पद्यते। उद्भिज्ज–स्वेदजाण्डज–जरायुजात्मक चतुरशीतियोनिषु सोऽद्वैतरुपेण तिष्ठति तस्य गतिश्च सर्वमैवाप्रतिहतैव भवति। तस्य पूर्णविकाशश्च जीवन्मुक्तदशायां भवति। अस्वाभाविकश्च संस्कारो जीवस्य मानवयोनिसमागमनकालत एवोत्पद्यते तत्र च अनन्ततामाश्रित्य अनेकपथेन परिणममानो जीवाननेकधा सुखदुःखमयानन्तगमागमचक्रे भ्रामयन् तेभ्यो भोक्तुमवसरन्नार्पयति।

मनुष्ययोनाविहागत्य स्वाभाविकाऽस्वाभाविकयोरपि संस्कारयोरेतदेव पार्थक्यम् यद् – बन्धनदशायामस्वाभाविकस्य संस्कारस्य प्राधान्यम् स्वाभाविकस्य चाप्राधान्यम्। जीवन्मुक्तावस्थायान्तु स्वाभाविकस्यैव संस्कारस्य प्राधान्यम् अस्वाभाविकस्य च गौणत्वं विद्यत इति।

सुखदुःखमयस्य शुभाशुभप्रवृत्तिजन्यभोगस्य मुक्तिदशायामाहो विविधेषूच्चावचलोकेषु परिभ्रमणेन यद्भोगवैचित्र्यमासाद्यते तत् सर्वमनन्तरुपतामाश्रितस्यास्वाभाविकस्यैव संस्कारस्य परिणामः। गमागमचक्रे परिभ्रामिकायां गतौ ऊर्ध्वगामिप्रवाहात्मिकाया क्रियाः कारणं तु स्वाभाविकस्य संस्कारस्य शक्तिरेव। इत्यत एव जीवन्मुक्तदशायां महापुरुषा अस्वाभाविक–संस्कारसमुत्पन्न फलं समश्नुवते। स्वाभाविकसंस्काराधीनाः सन्तः सुखदुःखात्मकद्वन्द्व–समानतयैवानुभवन्तः स्वान्तःकरणप्रवाहं ब्रह्मानन्दात्मकानन्तार्णवे विलापयितुं समर्था भवन्ति।

ननु कथं रजोवीर्याभ्यामेवोभयोः संस्कारयोराकर्षणं भवतीति पुनराशङ्कते – यतो हि वीर्य्यञ्च सप्तानामपि धातूनां साररूपतया जीवानां स्थूलशरीरस्य बीजानामुपादानकारणं भवतु नाम, परन्तु भाव–गुण–मूलकस्य स्वाभाविकस्य संस्कारस्याकर्षणनिदानं कथं

भवितुमर्हतीति शङ्कितुरभिसन्धिः। तत्रोत्तरयति — यदेवं भूताया शङ्कायाः समाहितिः सरला स्फुटतरैव तथाहि — चिज्जडग्रन्थिरुपात्मकस्य जीवस्य प्रधानाविर्भवावस्थायामेव स्वाभाविक–संस्कार उत्पद्यते। यस्य प्रधानं कार्य्यमेतदेवास्ति यत् जीवानुत्तरोत्तरं उन्नताऽवस्थायां प्रापयन्नभ्युदयप्रदानेन निःश्रेयसमार्गे समारोहयन्नधः पतितुमवसरं न लभ्येदिति। उदाहरणतो यथा — जीवो यदाआम्राद्युद्भिद् — योनितः चलदलयोनिं व्रजति। हस्तियोनितो वा गोयोनिमभ्येति। तदा तस्य क्रमोन्नतिरियं उक्तोन्नतयोनिसम्बन्धिस्थूलशरीरसाहाय्येनैव समेधते। स्थूलशरीरं हि न केवलं भोगायतनमेव, किन्तु जीवानां क्रमोन्नतेरवलम्बनीयं क्षेत्रमपि तदेवाङ्गी क्रियते। यतश्च मानवो यदा एकशरीरतः शरीरान्तरं गृह्णाति, तदैव स क्रमोन्नतिपथपथिको भवति। इत्थञ्च स्थूलशरीरमेव क्रमोन्नत्या मुक्तिपथप्रापकं क्षेत्रमिति तस्मिन्नेव स्वाभाविकस्य संस्कारस्याङ्गीभूतयो संस्कारयोराकर्षणसम्भव इत्यलम्।

### (3) २. सद्योमुक्तिः

आत्यन्तिकप्रलयस्यैव नामान्तरं सद्योमुक्तिर्विद्यते। यथा नैमित्तिकप्रलयः कल्पावसाने ब्रह्मणो दिनस्यान्ते भवति। तथैव प्राकृतिकः प्रलयोऽपि ब्रह्मण आयुषः शेषे (द्विपरार्द्धे)[१] सम्पद्यते किन्तु आत्यन्तिकस्य प्रलयस्य कश्चन कालो निश्चितो नास्ति स तत्कालेऽपि सम्भवितुमर्हति, कोटिवर्षपर्यन्तमपि न सम्भवति। अपि तु अस्य साधनसामग्री यदैवोपतिष्ठते तदैवायं जायते। वस्तुतः आत्यन्तिकः प्रलयः आत्यन्तिकदुःखनिवृत्तिरेव नामान्तरमस्ति। विविधदुःखाऽत्यन्तनिवृत्तिस्तु लौकिकानुश्रविकोपायैरेव सम्भवति। आत्यन्तिकलयो नाम सर्वस्मिन्नज्ञात तत्कार्यनाशात्मको मोक्षः सद्यो मुक्तिर्निगद्यते। तच्चाध्यात्मिकादित्रय दुःखसहमिति ज्ञात्वा शुद्धो विवेकी उत्पन्नवैराग्यः सन् गुरूपदेशादिनोत्पन्नज्ञानः प्राप्नोति।[२] आत्यन्तिक–

---

१. *ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः।*
*आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्द्धकः।। — विष्णुपुराण ६/४/३४।*

२. *यदैवमेतेन विवेक–हेतिना मायामयाहङ्करणात्म–बन्धनम्।*
*छित्वाऽच्युतात्माऽनुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्गः सम्प्लवम्।।*
*— श्रीमद्भागवते १२/४/३४।*

भवितुमर्हतीति शङ्कितुरभिसन्धिः। तत्रोत्तरयति – यदेवं भूताया शङ्कायाः समाहितिः सरला स्फुटतरैव तथाहि – चिज्जडग्रन्थिरुपात्मकस्य जीवस्य प्रधानाविर्भावावस्थायामेव स्वाभाविक–संस्कार उत्पद्यते। यस्य प्रधानं कार्य्यमेतदेवास्ति यत् जीवानुत्तरोत्तरं उन्नताऽवस्थायां प्रापयन्नभ्युदयप्रदानेन निःश्रेयसमार्गे समारोहयन्नधः पतितुमवसरं न लभ्येदिति। उदाहरणतो यथा – जीवो यदाआम्राद्युद्भिद् – योनितः चलदलयोनिं व्रजति। हस्तियोनितो वा गोयोनिमभ्येति। तदा तस्य क्रमोन्नतिरियं उक्तोन्नतयोनिसम्बन्धिस्थूलशरीरसाहाय्येनैव समेधते। स्थूलशरीरं हि न केवलं भोगायतनमेव, किन्तु जीवानां क्रमोन्नतेरवलम्बनीयं क्षेत्रमपि तदेवाङ्गी क्रियते। यतश्च मानवो यदा एकशरीरतः शरीरान्तरं गृह्णाति, तदैव स क्रमोन्नतिपथपथिको भवति। इत्थञ्च स्थूलशरीरमेव क्रमोन्नत्या मुक्तिपथप्रापकं क्षेत्रमिति तस्मिन्नेव स्वाभाविकस्य संस्कारस्याङ्गीभूतयो संस्कारयोराकर्षणसम्भव इत्यलम्।

### (3) २. सद्योमुक्तिः

आत्यन्तिकप्रलयस्यैव नामान्तरं सद्योमुक्तिर्विद्यते। यथा नैमित्तिकप्रलयः कल्पावसाने ब्रह्मणो दिनस्यान्ते भवति। तथैव प्राकृतिकः प्रलयोऽपि ब्रह्मण आयुषः शेषे (द्विपरार्द्धे)[१] सम्पद्यते किन्तु आत्यन्तिकस्य प्रलयस्य कश्चन कालो निश्चितो नास्ति स तत्कालेऽपि सम्भवितुमर्हति, कोटिवर्षपर्यन्तमपि न सम्भवति। अपि तु अस्य साधनसामग्री यदैवोपतिष्ठते तदैवायं जायते। वस्तुतः आत्यन्तिकः प्रलयः आत्यन्तिकदुःखनिवृत्तिरेव नामान्तरमस्ति। विविधदुःखाऽत्यन्तनिवृत्तिस्तु लौकिकानुश्रविकोपायैरेव सम्भवति। आत्यन्तिकलयो नाम सर्वस्मिन्नज्ञात तत्कार्यनाशात्मको मोक्षः सद्यो मुक्तिर्निगद्यते। तच्चाध्यात्मिकादित्रय दुःखसहमिति ज्ञात्वा शुद्धो विवेकी उत्पन्नवैराग्यः सन् गुरूपदेशादिनोत्पन्नज्ञानः प्राप्नोति।[२] आत्यन्तिक–

---

१. *ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः।*
*आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्द्धकः।।* – विष्णुपुराण ६/४/३४।

२. *यदैवमेतेन विवेक–हेतिना मायामयाहङ्करणात्म–बन्धनम्।*
*छित्वाऽच्युतात्माऽनुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्गः सम्प्लवम्।।*
– श्रीमद्भागवते १२/४/३४।

दु:खनिवृत्तिरुपो मोक्ष इति निर्गलितोऽर्थ:। तथा च आत्मानात्मविवेकद्वारा अज्ञानाऽपनयनपूर्वकं मायामये अहङ्कारबन्धने छिन्ने आत्मस्वरूपस्य साक्षात्कारे सति ज्ञानोदये जाते भवति आत्यन्तिक: प्रलय: सद्योमुक्ति:। अर्थादात्यन्तिक प्रलयदशायां साधको ज्ञानरूपिणा खड्गेन आत्मान आवरकं बन्धनंकारिणं मिथ्याभूतमहङ्कारं विच्छिद्य यदैव स्वरूपे स्थितो भगवतत्त्वमनुभवति सैव सद्योमुक्तिरित्यलयति विस्तरेण।



# षष्ठोऽध्यायः

## (१) भक्तितत्त्वम्

विदितचरमेवास्ति धर्मधुरीणामास्तिकजनानां यदि जगतीतले चतुरशीतिलक्षयोनिषु जन्ममरणपरम्परामनुभूयानेकजन्मार्जित पुण्यपुञ्जप्रभावैर्मनुष्यशरीरमासादयति जीवलोकः "कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्"। तदिदमतिदुर्लभं मानवशरीरमवाप्यापि न सर्वे जीवा जन्ममरणपरम्पराऽनुभवदुःखसागरमुत्तर्तुं प्रभवन्ति, किन्तु तत्राधिकतराः पुनरपि तासु चतुरशीतियोनिषु वंभ्रम्यमाणाः कठिनतरां दुःखपरम्परामनुभवन्तो भूयो भूयो जन्ममरणचक्रे चङ्क्रमन्त एव। तादृग्विधे च वैषम्ये नान्यदुपलभ्यते मूलम् ऋतेऽनन्यभगवद्भक्तेः। अनन्यया भक्त्या भगवन्तं प्राप्य भक्तः संसारे आवागमनचक्राद् विमुक्तः शाश्वतं सुखमुपलभते। तस्माद् भगवत्प्राप्तिरुपशाश्वतसुखसाधनं भक्तिरेवास्ति।

यद्यपि "अपां सोममृता अभूम" इति श्रुत्या सोमपानादिभिर्लभ्यस्य स्वर्गादेरपि सुखसाधनत्वं प्रतीयते, तथापि "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति गीतावचनाऽनुसारं भोगेन पुण्यक्षयानन्तरं स्वर्गाच्युतिर्दर्शनात्र तदात्यन्तिकं सुखं मन्यन्ते विद्वांसः। वेदान्तसिद्धान्तानुसारं अभेदोपासनया निरतिशयानन्दरूपं विन्दते शाश्वतीं शान्तिं च लभते। पुराणामनुसारं भेदोपासनया परमात्मनः साक्षात्कारं सम्पाद्य जन्ममृत्युबन्धनक्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्सान्निध्यसुखमनुभवति। भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यन्यद् वास्तविकं सुखमस्तीह जगति।

"रसो वै सः" 'रसं लब्ध्वा आनन्दी भवति' इति श्रुत्यनुसारं भगवतो रसरूपत्वाद् ब्रह्मानन्दप्रदायिनं भक्तिरसमेव द्वारीकृत्य रसरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते। यथा पदार्थवादिनी न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसपथं प्रदर्शयतः। योगदर्शनञ्च जीवेश्वरयोरेकत्वाधिगमपूर्वकसमाधिना कैवल्यप्राप्तिं प्रतिपादयति। सांख्यदर्शनं तु त्रिविध–दुःखाऽत्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन मुक्तिमार्गमुपदिशति। मीमांसादर्शनमपि वैदिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति। वेदान्त–दर्शनञ्चाद्वयब्रह्मज्ञानेन मोक्षाधिगममुद्बोधयति तत्रैव भगवत्सान्निध्योपलब्धिहेतुभूतं भक्तिदर्शनमपि भगवत्तत्त्वसाक्षात्कारद्वारा अपवर्गद्वारंमुद्घाट्य परमंपदं प्रापयति भक्तवरान्।

अतो भक्त्या भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थनिर्वाणपदं प्राप्तुं शक्यते, इत्यत्र नास्ति कश्चन सन्देहः। तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्।[1]

पुराणानुसारं समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात् भक्तियोगोऽपि परमपुरुषार्थोऽभिप्रेतः। अत एव जीवनमुक्तानाममलात्मनां ज्ञानिनामपि भक्तिरावश्यकत्वेन अनिवार्या प्रतिपादिता श्रीमद्भागवते।[2]

अत एवाद्भुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य च भगवल्लीलकथा श्रवणादि श्रद्धापूर्विका भक्तिरिति द्वयमप्युपात्तम्।[3]

---

१. भक्त्या भामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।। — (श्रीमद्भगवद्गीता १८/५५)

२. आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थं भूतगुणो हरिः।। — (श्रीमद्भागवते १/७/१०)

३. तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायते।। — (श्रीमद्भागवते ११/२०/९)

तत्तत्पुराणेषु भगवतो भक्तिर्भक्तान् दुःखबाहुलादस्मात् संसारात् परमानन्दपूर्णं परिस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुगमं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनन्तु प्रायः प्रतिपुराणं प्राप्यत एव। अथापि पुराणमूर्द्धन्ये सर्ववेदान्तसारे वैष्णवतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीण विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि परमात्मनि संसक्तया भक्त्या समः कल्याणकारी कश्चन अन्यो मार्गो न दृष्टिगोचरतामायाति, तदुक्तं श्रीमद्भागवते।[1]

भक्त्या भक्तो यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलितानन्दाश्रुश्च न भवति तावद् आन्तरिकीं पवित्रतां नासादयति। यथा समाधिद्वारा चेतसः समताधिगमान् मानसिको भावो विषयेभ्यः समूलमपह्रियते, तथैव भगवद्भक्त्या साकं परमानन्दसम्बन्धसत्त्वात् पापराशिः प्रणश्यति। तदनन्तरं यथाऽग्निना सुवर्णं निर्मलं सत् स्वकीयं स्वाभाविकं स्वरूपं प्रतिपद्यते, तथैव जीवोऽपि भगवद्भक्त्या गलितमलिनसंस्कारः सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति। तथा चोक्तं श्रीमद्भागवतेः — भगवद्भजनायासुरबालकान् प्रह्लादेन।[2]

परमस्य तत्त्वस्य प्राप्तये पुराणानुसारं भक्तेर्महत् किमपि साधनं नास्ति। भक्तितुलनायां धर्मार्थकामानां किमपि मूल्यं नास्त। यदा भक्तिसाधनद्वारा सर्वश्रेष्ठं परमतत्त्वमपि सर्वतोभावेन साधकस्याधिकारे आगच्छति तदा किं पुनरवशिष्यते। तस्मात् पुराणानां मतेन भक्तिः परमपदप्राप्तये सर्वश्रेष्ठमस्ति साधनम्।[3]

---

१. *न युज्यमानया भक्त्या भगवत्यखिलात्मनि।*
*सदृक्षोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये।।* —श्रीमद्भागवते ३/२५/१९।

२. *तदा पुमान् मुक्तसमस्तबन्धन—*
*स्तद्भावभावानुकृताशयाकृतिः।*
*निर्दग्धबीजानुशयो महीयशा*
*भक्तिप्रभावेण समेत्यधोक्षजम्।।*
*अधोक्षजाऽऽलम्भमिहा शुभात्मनः*
*शरीरिणः संसृति चक्रशातनम्।*
*सद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः*
*ततो भजध्वं हृदये हृदीश्वरम्।।* —(श्रीमद्भागवते ७/७/३६—३७)

३. *धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।*
*समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि।।* — (विष्णुपुराणे १/२०/२७)

सर्वमिदं मानवयोनावेव सम्भवति नान्यत्र। विधातुः सृष्टेर्वैचित्र्यात् मानव एव केवलमेतादृगस्ति यो विचिन्त्य स्वशुभाऽशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अत एव सृष्टिनिर्माणाऽवसरे ब्रह्मदेवस्य मानवनिर्माणादेव परमसन्तोषोऽजायत्। तथा चोक्तं श्रीमद्भागवते[1]

अत एव सम्प्राप्य मानवं शरीरं नूनं सम्पादनीयमामयतत्त्वविज्ञानम्। अयमेव परमपुरुषार्थः, उत्कृष्टासिद्धिः, श्रेष्ठा च सम्पदास्ति। अनेनैव मानवजन्मनः साफल्यम् एतेनैव कृतार्थोऽयं लोकः, अमुनैव वसुन्धरा वस्तुतो वसुन्धरा। मानवजन्मलब्ध्वा आत्मज्ञानाय न प्रयतते तस्य महती हानिर्भवति। अत एवोक्तं पूज्यपादै श्रीमच्छङ्कराचार्यैः।[2]

श्रीमद्भागवतेऽपि उद्धवं प्रति भगवान् श्रीकृष्णो वक्तिः —

नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्।
मयाऽनुकूलेन नमस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा।।[3]

राजा मुचुकुन्दोऽपि भगवन्तं श्रीकृष्णं प्रोक्तवान् —

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथञ्चिदव्यङ्गमत्नतोऽनघः!।
पादारविन्दं न भजत्यसन्मति—
गृहान्धकूपे पतितो यथा पशुः।।[4]

---

१. सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्माऽवलोकधिषणं मुदमाप देवः।। — (श्रीमद्भागवते ११/९/२८)

२. लब्ध्वा कथञ्चिन्नरजन्मदुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।
यस्त्वात्ममुक्तौ न यतेत मूढ धीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात्।। —(विवेकचूडामणौ)

३. श्रीमद्भागवते ११/२०/१७।

४. श्रीमद्भागवते १०/५१/४७।

एतत्सर्वं लक्ष्यीकृत्यैव श्रुत्यपि स्पष्टमुद्घोषितम् –

तमेवैकं जानथ आत्मानमन्या
वाचो विमुञ्चथाऽमृतस्यैव सेतुः।
इह चेदवेदीथ सत्यमस्ति
नो चेदवेदीन्महतो विनष्टिः।।[1]

अत एव श्रीमद्भागवते सर्वकामनया भगवद्भजनमेव सिद्धान्तितं वैयासकिना शुकेन[2]–

श्रीमद्भागवतानुसारं मुक्तेः प्रधानानि त्रीणि साधनानि सन्ति – निष्कामकर्म, ज्ञानं, भक्तिश्चेति। तेषु ज्ञानस्य कृपाणधारासमानत्वेन सर्वसुलभत्वाभावात् – निष्कामकर्मणश्च कष्टसाध्यत्वात् भक्तिरेव सर्वसाधारणा सुभगा सुलभा च प्रतीयते।[3]

सत्ययुगादौ ज्ञानवैराग्ययोर्मोक्षसाधकत्वेऽपि कलियुगे भक्तेरेव प्राधान्यमस्ति। तथा चोक्तं पद्मपुराणीय श्रीमद्भागवत् माहात्म्ये।[4]

किञ्च पद्मपुराणानुसारं भगवन्तं स्वानुकूलं कर्तुं न तपस् आवश्यकताऽस्ति, न वा वेदाऽध्ययनमनिवार्यं विद्यते, नापि ज्ञानोपार्जनं श्रेष्ठं वर्तते, न च कर्मणः कर्त्तव्यत्वं भवति, किन्तु भगवत्साधनाय भक्तिरेव सर्वोत्कृष्टं साधनमस्ति। एतत्सत्यत्वे गोपिका एव सन्ति

---

१. कैवल्योपनिषद् १/५।

२. अकामः सर्वकामो वा मोक्षकाम उदार धीः।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम्।। – (श्रीमद्भागवते २/३/१०)

३. योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कस्यचित्।। –(श्रीमद्भागवते ११/२०/६)

४. कर्मभिर्भगवद्भक्तिर्भवतीशकृपा तथा।
ज्ञानं तेन विमुक्तिश्च मोक्ष धर्मार्थ संग्रहः।।
सत्यादि त्रियुगे बोधवैराग्यौ मुक्ति साधकौ।
कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी।। –(श्रीमद्भागवतमाहात्म्ये २/४)

प्रमाणम्। नहि ताभिस्तपस्तप्तम्, न च वेदाऽध्ययनं विहितम्, न वा ज्ञानमुपार्जितम्, नापि किञ्चित्कर्त्तव्यानुष्ठानं कृतम्। अपि तु भक्त्यैवेताः श्रीकृष्णं वशी चक्रुः। यथा वृक्षस्य पूर्णता फलेनास्ति, तथा भक्तेः पूर्णता भगवत्यनन्यप्रेम्णैवास्ति।[1]

यद्यपि भगवद्भक्तौ जीवमात्रस्यास्त्यधिकारो न्याययुक्तो हनुमज्जाम्बद्गरुडगजेन्द्रकाक–भुसुण्डिजटायुप्रभृतीनां पशुपक्षिप्लवङ्गमादीनां भगवद्भक्त्या परमपदप्राप्तिदर्शनाद्, तथापि सर्वसाधारणपशुपक्षिषु ज्ञानसाधनयोरभावादीश्वरभक्तिं कर्तुमशक्यतया शास्त्रकारा ईश्वरभक्तौ प्रधानतया मनुष्याणामेवाधिकारं वदन्ति। तथा च वादरायणसूत्रम् — "शास्त्राधिकारत्वान्मनुष्यस्य"। भगवद्भक्तौ रूपस्यायुषश्च न मूल्यमस्ति, न च विधाया उत्कृष्टत्वम्, नहि धनस्य जातेश्चोत्कर्षोऽप्यपेक्षते, न वा सदाचारस्य सद्गुणस्य च प्राधान्यं वर्तते, नापि बलं मुख्यं विद्यते, किन्तु प्रेमैवाऽनन्यं प्रतीक्षते, यतो हि भगवान् भक्तिप्रियः। तथाचोक्तं जीवगोस्वामिना।[2]

भक्तिर्भगवतः प्राणतोऽप्यधिका प्रियाऽस्ति। भक्त्या प्रार्थितो भगवान् नीचगृहेष्वपि गच्छति। तथा चोक्तं देवर्षिणानारदेन भक्तिं प्रति पद्मपुराणीय श्रीमद्भागवतमाहात्म्ये।[3]

प्रगाढया भक्त्या प्रसन्नो भगवान् सर्वमपि कार्यं परित्यज्य एकस्य भक्तस्य कृतेऽलौकिकं कर्म निर्वर्तयति, असम्भवञ्च सम्भावयति। तथा च सर्वशक्तिसम्पन्नः कर्तुमकर्तुमन्यथाकर्तु–

---

१. न तपोभि र्न वेदैश्च न ज्ञानेनापि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिका।। – श्रीमद्भागवत् माहात्म्ये २/१८

२. व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्।
कुब्जायाः कमनीयरुपमधिकं किं तत् सदाम्नो धनम्
भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः।। –हरिभक्तिरसार्णव।

३. त्वं तु भक्ते! प्रिया तस्य सततं प्राणतोऽधिका।
त्वयाहूतस्तु भगवान् याति नीचगृहेष्वपि।। – श्रीमद्भागवत् माहात्म्ये २/३।

समर्थोऽपि भगवान् श्रीकृष्णः पाण्डवकुलनन्दनस्य धर्मराजस्य भक्तिगुणगरिम्णा उत्कृष्टं कौरवकुलं दूरे परित्यज्य पाण्डवकुलस्य मङ्गलचिन्तायां नियतं व्यापृतो बभूव, अर्जुनस्य रथे हीनकर्मसारथ्यमपि कृतवान्।

भगवान् प्रह्लादस्य भक्त्याऽऽकृष्टो यत्र यत्र तस्य विपदमभिलक्षितवान् तत्र तत्र तां वारयितुं प्रववृते। मदोन्मत्तस्य करिणः पादतलेन मर्दितः, शैलशिखराद् भूमौ प्रक्षिप्तः, जीवनाऽपहारकं च विषलड्डुकं मधुरमोदकत्वेन परिणमय्यभगवता पालितः प्रह्लादः। हरिनामस्मरणमात्रेण भक्तिरसाभिप्लुतः प्रह्लादः "क्व ते नारायणः"? इति पित्रा हिरण्यकशिपुना यदापृष्टस्तदा "सर्वत्रैव वर्तते मे नारायणः" इत्युक्तवान्। यदि "सर्वत्रैव वर्तते ते नारायणस्तदत्रस्तम्भे अपि वर्ततां नाम "इत्युक्तवति पितरि" "वाढम्" इति यदा प्राह प्रह्लादः, तदैव तेन सवेगमभिहतात् स्तम्भान्नारायण उत्कृष्टनरसिंहरुपेणाविर्भूय भक्तस्य प्रतिकूलचारिणं हिरण्यकशिपुं नखैर्विदार्य पञ्चत्वं प्रापयामास। प्रह्लादं च तस्यैव राज्येऽभिषिच्य भक्तस्य भगवच्चिन्तनपरस्य साहाय्यं सम्पादयामास। तथा चाह श्रीमद्भागवते।[1]

एवं पञ्चवर्षवयस्कस्य ध्रुवस्य हिंस्रश्वापदसमाकीर्णेऽरण्येरक्षां चकार। तस्य परमया भक्त्या सुतरां सन्तुष्टो भगवान् स्वकीयवैकुण्ठलोकस्याऽप्युपरिकञ्चिन्नूतनं लोकं तदर्थं निर्माय दर्शितवान् भक्तजनेऽपूर्वं स्नेहातिरेकम्।

द्वापरे यदा दुष्टो दुःशासनः कौरवसभायां द्रौपद्याः वस्त्रं बलात् समाकृष्य व्यपाक्रष्टुं प्रचक्रमे तदा सा वशिष्ठोपदेशानुसारं भगवतः स्मरणेमनोदधे।[2] इत्येवं विचार्य आपत्ति—

---

१. सत्यं विधातुं निजभृत्यभाषितं
  व्याप्तिं च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भूतरुपमुद्वहन्
  मध्ये सभायां न मृगं न मानुषम्।। — श्रीमद्भागवते ७/८/१८।

२. ज्ञानं मया वशिष्ठेन पुरा गीतं महात्मना।
महत्यापदि सम्प्राप्ते स्मर्तव्यो भगवान् हरिः।। — महाभारत सभापर्वणि ६८/४१।

कालेऽभयदातारं भगवन्तं श्रीकृष्णं सस्मार।[1] अनन्यशरश्रेण्या आर्तया तया समभ्यर्थित आर्तत्राता भगवान् श्रीकृष्णः तस्या अनन्यया भक्त्या वसनरुपेण परिणतो भूत्वा लज्जां परिरक्ष्य दर्शितवान्, भक्तिमर्यादां प्रचारितवांश्च द्रौपद्याः पातिव्रत्यधर्मप्रकर्षम्।[2]

भक्तेः प्रणयस्य हृदयानुरागरुपस्य स्नेहस्य च दृश्यते समुत्कर्षो वृन्दावनलीलायाम्। तत्र हि परमया भक्त्या प्रणयादिना वा समाकृष्टो हरिः सर्वेषामेव काम्यं फलं सम्पादयामास। बालोऽपि कृष्णः शिशुजनैरसाध्यानि कानिचित्कर्माणि समपाद्यात्मन ईश्वरतां दर्शितवान्।

अम्बरीष पृथु प्रभृतयो राजानः प्रेम्णा भगवन्तमर्चमित्वाऽनायासेन तं प्रापुः। सुदामा केवलैः पृथुकतण्डुलकणैः, गजेन्द्रः केवलेन पुष्पेण शबरी च बदरीफलैरेव भगवन्तं सन्तर्प्य स्वीयां स्वीयामभिलाषां पूरितवन्वः प्राप्तवन्तश्च तत्कृपया परमं पदम्। एतत् सर्वमालोच्येदं वक्तुं शक्यते यत् सत्यमुक्तं श्रीमद्भगवतगीतायां भगवता श्रीकृष्णेन।[3]

एवमुत्कृष्टया भक्त्या सन्तुष्टो भगवान् भक्तस्य सर्वविधां विपदं वारयति, मनोरथं च सर्व पूरयति। भगवत्पादपद्मपरागसमासक्तचेता भक्तो भवाम्बुधिं वत्सपदमिवोल्लङ्घ्य परमं पदं प्राप्नोति।[4]

---

१. गोविन्द! द्वारकावासिन्! कृष्ण! गोपीजनप्रिय!।
कौरवैः परिभूतां मां किं न जानासि केशव!।।
कौरवार्णवमग्नां मांमुद्धरस्व जनार्दन!।
प्रपन्नां पाहि गोविन्द! कुरुमध्येऽवसीदतीम्।।—महाभारते सभापर्वणि ६८/४२—४३।

२. कृष्णञ्च विष्णुञ्च हरिं नरञ्च
त्राणाय विक्रोशति याज्ञसेनी।
ततस्तु धर्मोऽन्तरितो महात्मा
समावृणोद्वै विविधैः सुवस्त्रैः।। —महाभारते सभापर्वणि ६८/४६।

३. पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।। —श्रीमद्भगवतगीतायां ९/२६।

४. समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः।
भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदा न तेषाम्।। —श्रीमद्भागवते १०/१४/५८।

सर्वदा कल्याणकरं भगवतो नामोच्चारयन् रुपं चिन्तयन् लीला आकर्णयन् यशश्च चिन्तयन् भगवति समासक्तो भक्तो मुक्तिं लब्ध्वा न च भूयः जन्ममरणचक्रे चङ्क्रमितो भवति। तथा चोक्तं श्रीमद्भागवते।[१]

## षष्ठाध्याये – २ भक्तिधर्माः

भक्तिश्चासौ धर्मश्चेति भक्तिधर्मः। समष्टिव्यष्टिरूपब्रह्माण्डपिण्ड मय सम्पूर्णसृष्टिक्रियां धरति यः स धर्मः। व्युत्पत्तिलभ्यस्यैवार्थस्य श्रुतिस्मृति—बोध्यत्वं तद्यथा – "धर्मो विश्वस्य जगतः प्रतिष्ठा, लोकेधर्मिष्ठं प्रजा उपसर्पन्ति।" धर्मेण पायमपनुदति, "धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति", "धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः, यत्स्याद्धारणसंयुक्तः स धर्म इति निश्चयः" इति।

## भक्तिधर्मस्य विकाशोऽनेकधा दृश्यते, तद्यथा –

स्नेहप्रेमश्रद्धाभेदेन लौकिकोऽनुरागस्त्रिविधः। तत्र पुत्रकन्याशिष्यादिषु निम्नगामी अनुरागः स्नेह उच्यते। मित्रकलत्रादिषु समानगामी अनुरागः प्रेम उच्यते। मातृपितृगुरुजनादिषु च मान्यगामी अनुरागः श्रद्धानाम्ना व्यपदिश्यते। ईश्वराभिमुखी प्रबर्द्धमाना श्रद्धैव भक्तिपदवाच्यतां धत्ते।

अनुरागोऽपि द्विविधः — काममूलकः प्रेममूलकश्च। काममूलके आसक्तिः, प्रेममूलके च भावः प्राकट्यमासादयतः। कामस्य मूलस्वार्थः, तस्य लक्ष्यमनात्मेन्द्रियात्मकम्। प्रेम्णो मूलं पदार्थः, तदीयं लक्ष्यमात्मा। अतः कामी यावतीं स्वार्थपरतां परित्यजति तावत्येव तत्र

---

१. *शृण्वन् गृणन् संस्कमरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते।*
*क्रियासु यावच्चरणारविन्दयोः आविष्टचेता न पुनर्भवाय।।*

*— श्रीमद्भागवते १०/२/३७।*

परार्थपरता व्यज्यते। स च प्रेमिको जायते। वस्तुतः प्रेमवृद्ध्या सहैव प्रेमिकस्य स्वार्थवृत्तिरपि क्षीयते। परिवर्द्धते च परार्थवृत्तिः। तदन्तःकरणाऽनुरागतरङ्गिणी कामभूमिं विहाय प्रेमभूमौ प्रवहति। स्वार्थस्याऽज्ञानमूलकत्वात् कामिनि विशुद्धप्रेमोदयाभावात् नासौ पुरुषः भक्तेरधिकारी, अपितु भगवदुन्मुखः प्रेमिक एव भवति भक्तेरधिकारी। तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन।[1]

स्नेहादयस्तिस्रोऽपि वृत्तयो लौकिकत्वाद्विनश्वरशीलाः, यतो जगतो नश्वरत्वा-त्तदाश्रयोऽपि विनश्वरशील एव, किन्तु भक्तिस्तद्विलक्षणा, यतः सा अनश्वरे परमात्मन्यलौकिकप्रेमरुपा। लौकिके व्यवहारमनुसृत्य मित्र–पुत्र–कलत्रादिभिः सह यः स्नेह–प्रेम–श्रद्धादिसम्बन्धो भवति सनश्वरो बन्धनकारणं च, यतो हि तन्मूले मोहस्य काममूलकममत्वबुद्धिसद्भावात् जीवेन बन्धनमेव लभ्यते, न मुक्तिः। परमेश्वरविषयिका-ऽलौकिकेऽनुरागे तु तद्भावाभावः, तस्य नित्यसत्यसनातनसकलकामनाश्रयभावाधीश्वरत्वात्। अत ईश्वरे स्नेहादिव्यवहारो नूनमेव भक्तिपदवाच्यः। वस्तुत आत्मसुखेच्छा सम्बन्धसंयुक्तत्वाद् मोहमिश्रिता लौकिकाऽनुरागरुपाः स्नेह–प्रेम–श्रद्धादयः सत्त्वोन्मुखरजः प्रधानाः भगवदनुराग-रुपिणीभक्तिस्त्वलौकिकी मोहातीता शुद्धसत्त्वगुणमयी च प्रोच्यते। अतो भगवद्भक्तहृदयविहारिणी साक्षान्मुक्तिप्रदायिनी भक्तिर्लोकाऽतीतेत्यत्र न कश्चित् सन्देहलेशः।

---

१. मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते। न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा।।
भजन्त्यभजतो ये वै करुणा पितरो यथा। धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः।।
भजतोऽपि न ये केचिद् भजन्त्यभजतः कुतः। आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः।।
नाऽहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिसिद्धये।
यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृतो न वेद।।
एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः।
मया परोक्षं भजतातिरोहितं माऽसूयितुं मार्हथ तत् प्रियं प्रियाः।।
न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः।
या माऽभजन् दुर्जरगेह शृङ्खलाः संवृश्च्य तद्वः प्रतियातु साऽधुना।।
— (श्रीमद्भागवते १०/३२/१७–२२)

यथा हिमालयप्रदेशान्निर्गमकालेऽतिशयचाञ्चल्यात् कापि धारा अलकनन्दा, काचनमन्दाकिनी काचिच्च भागीरथीति गीयते, पश्चात्तिस्रो मिलित्वा समतलभूमौ प्रवहन्त्यः पुष्टाः शान्ताश्च भूत्वा गङ्गानाम्ना व्यपदिश्यन्ते, तथैवानुरागमयीधारा स्नेहप्रेमश्रद्धारुपेण पति–पुत्र–मित्र–पितृप्रभृतिषु प्रवहन्ती चञ्चलरुपा पावनी गीयते। ततश्च स्वीय त्रिविधनामरुपस्वभावान् परित्यज्य स्वार्थरहितभगवद्भावमय समतलप्रदेशे एकीभूय शान्त–धारारुपेण यदा प्रवहति तदैवासौ धारा भक्तिरिति प्रोच्यते। तथा चपुत्रमित्रपितृप्रभृतिषु या अनुरागोत्पत्तिः स्नेहप्रेमश्रद्धारुपेण जायते सैव पश्चाद् भगवद्भावोन्मुखी ईश्वरानुरागरुपिणी भक्तिरित्यभिधीयते।

वस्तुतोऽनुरागोत्पत्तिः प्रथमाऽवस्थायां मानवान्तःकरणे स्नेहप्रेमश्रद्धारुपेण जायते। नानारुपधारिण्यामस्यामनुरागवृत्तौ यथायथाऽज्ञानस्वार्थेन्द्रियमूलिकाऽऽसक्तिर्ह्रासमुपैति तथा–तथाऽनुरागवृत्तिरसौ पवित्रासती भगवद्भावं प्राप्नोति। इदमेव भक्तिधर्मस्य क्रमविकासरहस्य–मवधेयम्।

जीवो हि स्वस्वरुपं विस्मृत्य प्रकृतिसम्बद्धत्वात् तद्गतेच्छासुखदुःखादिधर्मान् आत्मन्यारोपयन् घटीयन्त्रवद् जन्ममृत्यु चक्रे परिभ्राम्यन्नाध्यात्मिकाधिभौतिकाधिदैविकञ्चेति दुःखत्रयमुपभुङ्क्ते, परन्तु यदा परया भक्त्या इदमेवावधारयति यदहं शरीरभयाऽनवच्छिन्नः, तद्गतसुखदुःखाऽसम्बद्धः, सर्वव्यापकपूर्णानन्दसच्चिदानन्दस्वरुपस्तदानीमसौ ज्ञानी भक्तः स्वस्वरूपमधिगच्छन् पूर्णसच्चिदानन्दसागरे निमज्जति। तदुक्तं श्रीमद्भागवते उद्धवं प्रति भगवता श्रीकृष्णेन।[1]

---

१. तस्माद् ज्ञानेन सहितं आत्मा आत्मानमुद्धवः।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः।। —श्रीमद्भागवते ११/१९/५
ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन्।। —श्रीमद्भागवते ११/१९/६।
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि।। —श्रीमद्भागवते ११/२६/३०
भक्त्योद्धवाऽनपायिन्या सर्वलोकमनोहरम्।
सर्वोत्पत्त्यव्ययं ब्रह्म कारणं मोपयाति सः।। —श्रीमद्भागवते ११/१८/४५।

आत्मसाक्षात्कारं कुर्वता ज्ञानिना भक्तेन परमपदमधिगम्यते आनन्दस्वरुपे सर्वाधारे परमात्मनि परां भक्तिं लभमानस्य साधकस्य न किञ्चिदपि प्राप्तुं अवशिष्यते। निर्विकल्पक–समाधिं प्राप्तवता साधकेन योऽसीमानन्दोऽधिगम्यते ना, सौ वाचा वर्णयितुं शक्यते। सच्चिदानन्दमहासागरे निमग्नस्य भक्तशिरोमणेः समस्तमपि संसारबन्धनं विच्छिद्यते। पञ्चभिः कोशैः सह आत्मनः सम्बन्धेन या किल जीवभावसमुत्पत्तिः सा प्रणश्यति, भक्तिप्रभावेण योगी भगवदानन्दसत्तामधिगम्य संसारचक्रजन्ममृत्युभयाद् विमुच्यते।

स्वभ्रातुरुत्तमस्य बधेन सञ्जातरोषं पुण्यजनान् निघ्नन्तं स्वकीयं पौत्रमौत्तानपादिं भक्तप्रवरं ध्रुवं पुण्यजनवधान्निवारयता भगवता स्वायम्भुवेन मनुना स्पष्टमुक्तं श्रीमद्भागवते।[१]

## भक्तिधर्मलक्षणमीमांसा –

कोऽस्ति भगवान्, किञ्चास्ति तस्य भक्ते स्वरूपमितिप्रश्ने संक्षेपादिदमेव वक्तुं शक्यते यत् – यः सर्वसाक्षी, सर्वान्तिर्यामी, सर्वशक्तिमान्, सर्वेश्वरः, सर्वशासकः, सर्वज्ञो निरतिशयज्ञानवाँश्चास्ति। यस्य भक्त्या मानवः सकलदुर्गुणदुःखविमुक्तो भूत्वा विशुद्धो भवति। योऽजन्मापि जीवेषु दयां कृत्वा पुराणेषु गीतायाञ्च कृतस्वकीयप्रतिज्ञाऽनुसारं "प्राणिनां कल्याणाय" "धर्मस्य स्थापनाय, अधर्मस्य निराशाय, सतां संरक्षणाय, दुष्टानां दलनाय च" समये–समये स्वमायया देवमानवपश्वादिषु योनिषु, सत्ययुगे मत्स्य–कूर्म–वाराह–वामन–नृसिंहरुपेण, त्रेतायां रामरुपेण, द्वापरे श्रीकृष्णबलरामरुपेण, कलियुगे च बुद्ध–कल्किरुपेणावतीर्य भक्तानाह्लादयति, शास्त्रीयमर्यादां पालयति, सुखयति च समस्तं लोकम्।[२] स एव नित्योऽविनाशी सच्चिदानन्दघनस्वरूपः सर्वव्यापकः परमात्मा भगवान्

---

त्वं प्रत्यगात्मनि तदा भगवत्यनन्ते आनन्दमात्र उपपन्नसमस्ताशक्तौ।
१. भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढः।। –श्रीमद्भागवते ४/११/३०

२. यदा यदा हि धर्मस्य ग्लानिर्भवति भारतः। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।
– श्रीमद्भागवद्गीतायाम् ४/७–८

बोद्धव्य:। तस्मिन्परमानुरक्तिरनन्यं प्रेम वा भक्तिर्ज्ञेया। एवञ्च जगदाधारपरमेश्वरविषयकोऽनन्योऽनुरागो भगवद्विषयकान्त: करणवृत्तिविशेषो वा भक्तिरिति प्रतिफलति।

यतिवर्य श्रीमधुसूदनसरस्वती सिद्धान्ताऽनुसारं भगवद्भावेन द्रवीभूतस्य चित्तस्य सविकल्पा तदाकारतापत्तिरेव भक्तिर्निगद्यते।[1]

अतएव श्रीमद्भागवते महापुराणे भगवद्गुणगानश्रवणमात्रेणैव भगवदभिमुखी समुद्रगामिन्या गङ्गायाऽविच्छिन्नया धारया समा चित्तस्य कामनाहीना अविच्छिन्नागतिरेव भक्तियोग: प्रोक्त: स्वयमेव भगवता कपिलेन स्वमातरं देवहूतिं प्रति।[2]

ईदृशमेव धारावाहिकमविच्छिन्नं पूततमं प्रेम प्रार्थयता प्रह्लादेनापि भगवन्तं नृसिंहं प्रति निवेदितमासीद् यत् – भगवन्! यथा विषयलोलुपा अज्ञानिनो मानवा विषयान् प्रत्येकचित्ता: सन्त: आन्तरिकीं प्रीतिं कुर्वन्ति तथैव ममाप्यवच्छिन्नं प्रेम परमात्मनि स्यात्, न ममान्त:करणात् तत् प्रेम कदाचिदपि दूरीभवतु।[3]

सिद्धान्तममुमेवादाय भक्तिदर्शनस्य सूत्रकारा देवर्षिनारदमहर्षिशाण्डिल्यप्रभृतयो महामुनय: स्व–स्वग्रन्थेषु भक्तिधर्मलक्षणं कृतवन्त:। तत्र देवर्षिणा नारदेन स्वकीये भक्तिग्रन्थे सूत्रं सूत्रयता परमेश्वरे परमं प्रेमैव भक्ति: प्रोक्ता।[4]

---

१. *द्रवीभावपूर्विका मनसो भगवदाकाररुपा सविकल्पा वृत्तिर्भक्ति:। –भक्तिरसायने।*

२. *मद्गुण श्रुतिमात्रेण मयि सर्वगुणाश्रये।*
*मनोगतिरविच्छिन्ना यथा गङ्गाऽम्भसोऽबुधौ।।*
*लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।*
*अहैतुक्यव्यवहिता या भक्ति: पुरुषोत्तमे।। –श्रीमद्भागवते ३/२९/११–१२।*

३. *या प्रीतिरविवेकानां विषयेष्वनपायिनी।*
*त्वामनुसरत: सा मे हृदयान्मापसर्पतु।। –विष्णुपुराणे १/२०/१९।*

४. *"सा त्वमस्मिन् परमप्रेमरूपा" –नारदभक्तिसूत्रे, सूत्रम् २।*

महर्षिणा शाण्डिल्येन स्वकीयभक्तिसूत्रे ईश्वरं प्रति परमाऽनुराग एव भक्तिर्निगदिता, यतो हि परमेश्वराभिमुखेन प्रेम्णैव जीवोऽमृतं रूपं मोक्षं लभते।[१]

अङ्गिरसो मुनेर्मतेन भक्तिर्भगवन्तं प्रत्यनुरागविशेषः, अलौकिकेश्वराऽनुरागरूपा वा। तन्मते सर्वासु चित्तवृत्तिषु प्राधान्येन वृत्तिद्वयं कारणस्वरुपतां भजते – रागो–द्वेषश्च। तत्र रागो रजः प्रधानः, द्वेषश्च तमः प्रधानः। सुखाऽनुरागस्मरणपूर्वकं प्रवृत्तिरेव रागः, दुःखाऽनुस्मरणपुरःसरं विरूद्धभावनोत्पत्तिरेवद्वेषः। तथा च तमः प्राधान्याद् द्वेषवृत्तिर्द्वेषस्य रागवृत्तिश्च सत्त्वोन्मुखरजः प्राधान्येन सुखस्य हेतुर्भवति। भक्तिः किल द्वेषप्रतिकूला रागानुकूला चालौकिकीवृत्तिः। अलौकिकी भगवद्भक्तिः सात्त्विकी अतस्तया साकं भगवदनुरागस्यास्ति सम्बन्धः। फलतोऽधोगतिदायिन्या द्वेषवृत्तेर्विपरीतासमुन्नतिसम्पादिकाऽनुरागवृत्तिरुपिणी भक्तिरूक्ता भवति। एवञ्च द्वेषातीतः रागानुरूपा परमेश्वराऽभिमुखगमनशीला सत्त्वगुणमयी भगवति विशिष्टालौकिकानुरागवृत्तिरेव भक्तिः। अलौकिकेश्वरानुरागरूपा वा भक्तिः। भक्तिरसायनस्य प्रथमे उल्लासे धर्मपूर्वकं भगवद्गुणानामाराधनेन द्रवीभूतस्य चेत्सस्तैलधारावदविच्छिन्न– ध ारावाहिका भगवदाकारवृत्तिरेव भक्तेः सामान्यलक्षणमभिहितं श्रीमधुसूदनसरस्वतीपादेन।[२]

भक्तिविशेषप्रतिपादके द्वितीये उल्लासे तु द्रवीभूते चेतसो मनसश्चगोविन्दाकारतावृत्तिरेव भक्तिरित्युक्तम्।[३] हरिभक्तिरसामृतसिन्धौ रुपगोस्वामिना[४] तु नारदपाञ्चरात्रे तु भक्तिलक्षणमेवं कृतमस्ति।[५]

---

१. सुखाऽनुशायी रागः, दुःखाऽनुशायी द्वेषः।। —योगसूत्रम्।

२. द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते।। —भक्तिरसायने १/३।

३. द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा।
सा भक्तिरित्यभिहिता (विशेषस्साधुनोच्यते) —भक्तिरसायने २/१।

४. अन्याभिलाषिताशून्या ज्ञानकर्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा।। —हरिभक्तिरसामृतसिन्धौ पूर्वभागे १/११।

५. सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्। हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते।।
अनन्यममता विष्णौ ममता प्रेमसङ्गता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः।।
— नारदपाञ्चरात्रे।

पूज्यपादैः श्रीमच्छङ्कराचार्यैस्तु स्वकीये विवेकचूड़ामणावात्मस्वरूपानुसन्धानमेव भक्तिः प्रोक्ताऽस्ति।[1]

एवमेभिस्तत्तदाचार्यैस्तु स्वस्वग्रन्थेष्वेवंविधं भक्तिलक्षणं कृतमस्ति। परमेषां समेषां समीक्षया इदमेव तात्पर्यमवसीयते यदखिलात्मनि भगवति परमान्यनन्यसाधारणं प्रेमैवास्ति भक्तिः।

भजसेवायामिति धातोर्भावे क्तिन् प्रत्ययेन निष्पन्नस्य भक्तिशब्दस्याप्यर्थः प्रेम्णा भगवतः सेवैव प्रतीयते। यथा वृक्षस्य पूर्णता फलेन भवति, तथैव भक्तेरपि पूर्णता परमप्रेमास्पदे पुरुषोत्तमे परमेण प्रेम्णैव निष्पद्यते। तस्माद् भगवति जगदीश्वरेऽनन्यानुराग एव भक्तिरिति निस्सरतिभक्तिधर्मलक्षणनिष्कर्षः।

## भक्तिधर्मस्य भेदनिरूपणम्

यद्यपि भक्तिधर्मस्य वर्गीकरणविषये विदुषां विभिन्नमतं विलोक्यते तथापि प्रधानतया निम्नाङ्कितं मतद्वयं सर्वसाधारणं प्रचलति।

१. भक्तिधर्मस्तावद् द्विविधा गौणी—परभेदात्। गौणी पुनर्द्विधा — वैधी—रागात्मिका च। वैधी अपि पुनः श्रवणादिभेदेन नवधा, रागात्मिका च हास्यादिरसभेदेन चतुर्दशधा विभज्यते। तथा च वैधी — रागात्मिका पराभेदाद् भवति भक्तिस्त्रिविधा। पूर्वं वैधी, ततो रागात्मिका, तदनन्तरं च पराभक्तिः समुज्जृम्भते। साधनदशायां गौणी एव सिद्धावस्थायां परा निगद्यते। अतः पराया भक्तेः प्राप्तये या साधनाऽवस्था सैव गौणी प्रोच्यते।

---

१. *स्वस्वरूपाऽनुसन्धानं भक्तिरित्यभिधीयते।। —विवेकचूडामणौ।*

गुरुशास्त्रोपदेशद्वारा निषिद्धसाधनपरित्यागपूर्वकं विहितसाधनाऽभ्यासेन प्रथमदशायां विधीयमाना भक्तिरेव वैधी समाम्नायते। भक्तेः समुन्नतिभूमिमासादयितुमियं किल सोपानरुपा।

यदा वैधीं भक्तिमनुष्ठितो भक्तस्य हृदये भगवन्तं प्रत्येवं विधोऽपूर्वोऽनुराग उत्पद्यते येनाहर्दिवं भक्तो भगवद्भावसागरे निमग्नोऽमन्दमानन्दसन्दोहं लभते, तदानीं तस्य चेतसि तैलधारावदानन्दामृतसिञ्चनकरोऽनवच्छिन्नो भक्तिरसप्रवाहो विजृम्भते। इयं दशैव रागात्मिका प्रोच्यते।

दशायामस्यां भक्तस्य मनोमधुपः प्रभुपादपद्ममकरन्दरसास्वादनोन्मत्तः सर्वत्रैव प्रभुमेव पश्यन्नानन्दनिमग्नो निरन्तरं तिष्ठति। भक्तहृदयं सांसारिकेभ्यो विषयेभ्यो विरक्तं सन्नहर्निशं भगवति लीनं भवति।

## भक्तिधर्मशास्त्रपरम्परापर्यालोचनम्

योगसाधनद्वारा चित्तवृत्तिनिरोधपूर्वकंमन्तःकरणं निर्मलं विधाय साधको भक्तेः प्रभावेण भगवन्तं साक्षात्कृत्य तत्सन्निधानं लभमान आत्मज्ञानमधिगम्य निर्वाणपदं प्राप्तुं शक्नोतीति निश्चित्य, उपासना परिपुष्टये विश्वकल्याणकामनया महर्षिभिः सुगमोपायं भक्तिशास्त्र–माविष्कृतम्।

तत्र देवर्षिणा नारदेन भक्तिविषयकाणि चतुरशीतिसंख्याकानि (८४) सूत्राणि प्रगीतानि, महर्षिणा शाण्डिल्येन च द्व्यधिकशतानि (१०२) सूत्राणि निर्मितानि। तत्र नारदभक्तिसूत्रापेक्षया शाण्डिल्यभक्तिसूत्रं भक्तिसम्प्रदाये विशिष्टं स्थानं महत्त्वं च बिभर्त्ति। अतएव तत्र द्वाभ्यां स्वप्नेश्वर–भवदेवमिश्राभ्यां पृथक्–पृथक् स्वतन्त्रं भाष्यद्वयं कृतमस्ति। श्रीस्वामिना नारायणतीर्थेन च विशदभावपूर्णा चन्द्रिकाख्या व्याख्या विहिताऽस्ति। एवं भाष्यद्वय–

व्याख्याविभूषितस्य शाण्डिल्यभक्तिसूत्रस्य भक्तसमाजे विपुलोऽस्ति प्रचारः प्रसारः समादरश्च। नारदभक्तिसूत्रे किमपि भाष्यं व्याख्यानं वा नेदानीं यावदवलोकितम्। किन्तु केवलं तत्सूत्राण्येव दृष्टिपथमायान्ति।

वर्तमानयुगे प्रामाणिकतया समुपलब्धस्य पूर्वोक्तमहर्षिद्वयप्रणीतस्य भक्तिसूत्रद्वयस्य पर्यालोचनया प्रतीयते यदाभ्यां द्वाभ्यां भक्तेराचार्याभ्यां देवर्षिनारद—महर्षिशाण्डिल्याभ्यां पूर्वमपि भक्तिशास्त्रस्यानेके आचार्यास्तद्ग्रन्थाश्चासन्। परमस्माकं दौर्भाग्याद् दैवदुर्विलसितया परिस्थितेः पारवश्याद् हिन्दूधर्मेऽनेकक्रान्त्युपस्थितेश्चेदानीं ते कालकवलिता जाताः। तेषां मध्ये एकस्यापि कस्यचन ग्रन्थरत्नस्य दर्शनं न जायते; किन्तु केवलं शाण्डिल्यभक्तिसूत्रे भक्तिविषयकमतान्तरप्रतिपादनप्रसङ्गे येषां पूर्वाचार्याणां चर्चाऽस्ति, ते सन्ति काश्यप—वादरायण—शाण्डिल्यजैमिनिमुनयः। तथाहि — "तामैश्वर्यपरां काश्यपः परत्वात्"[१], "आत्मैकपरां वादरायणः"[२], "उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम्"[३] "नाम्नेति जैमिनिः सम्भवात्"[४]।

एषां मध्ये (२/१/५) शाण्डिल्यभक्तिसूत्रे प्रोक्तः शाण्डिल्योऽयमेतस्माद् भक्तिसूत्रनिर्मातुः शाण्डिल्यादन्यः प्रतीयते। यतो हि शाण्डिल्याभिधा अनेके महर्षयस्तत्तद्ग्रन्थेषु श्रूयन्ते। (१) प्रथमस्तावत् शाण्डिल्यो भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः। (२) अपरो बृहदारण्यकोपनिषदि चतुर्थाऽध्यायस्य वंशनिरूपके ब्राह्मणे प्रथममन्त्रे "कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः, शाण्डिल्याच्छाण्डिल्यः"[५], इत्यादिना वर्णितो वंशर्षिः शाण्डिल्यः। (३) अन्यो व्यासशिष्यः शाण्डिल्यः संहिताप्रणेता महर्षिः शाण्डिल्यः। (४) इतरस्तु जया संहिता निर्माता नारदशिष्यत्वेन प्रथितयशा महर्षिः शाण्डिल्यः। परमेषु भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः पञ्चरात्रानुयायीति स्पष्टं प्रतिभाति, एतत्सूत्राणां तदनुसारित्वात्।

---

१. शाण्डिल्यभक्तिसूत्रे २/१/३।
२. शाण्डिल्यभक्तिसूत्रे २/१/४
३. शाण्डिल्यभक्तिसूत्रे २/१/५।
४. शाण्डिल्यभक्तिसूत्रे २/२/६।
५. बृहदारण्यकोपनिषदि ४/६/१।

एवमपि नारदभक्तिसूत्रे स्मृता भक्तेराचार्याः सन्ति पाराशर्य—गर्ग—शाण्डिल्य—ब्रह्मकुमार—व्यास—शुक—विष्णुकौण्डिन्य—शेष—उद्धव—आरुणि—बलिहनुमद्विभीषणादयः। तथाहि (१) पूजादिषु अनुराग इति पराशर्यः (१६) (२) कथादिषु इति गर्गः ।।१६।। (३) आत्मरत्यनुरोधेनेति शाण्डिल्यः ।।१८।। (४) नारदस्तु तदर्पिता खिलाचारिता तद्विस्मरणे परमव्याकुलतेति।। १९।। (५) तस्या ज्ञानमेव साधनमित्येके ।। २८।। ६—अन्योन्याश्रयत्वमित्यन्ये। (२९)। (६) स्वयं फलरुपतेति ब्रह्मकुमाराः। (३०)। (८) इत्येवं वदन्ति जनजल्पनिर्भया एकमताः कुमार—व्यास—शुक—शाण्डिल्य—गर्ग—विष्णु—कौण्डिन्य—शेष—उद्धव—अरुणि—बलि—हनुमद्विभीषणादयो भक्ताचार्याः।। ८३।।

नारदभक्तिसूत्र—शाण्डिल्यभक्तिसूत्रातिरिक्तानि कियन्त्यपि भक्तिसूत्राणि साम्प्रतं दृष्टिगोचरतामायान्ति। यथा श्रीहरिहरारण्यस्वामिभिर्विरचितानि षड्विंशति (२६) संख्याकानि परमभक्तिसूत्राणि। श्रद्धेय महामहोपाध्याय पं० गोपीनाथकविराजमहोदयद्वारा टिप्पणविवरणादिभिः सनाथीकृत्य सरस्वतीभवनग्रन्थमालातो मुद्रिते भक्तिमीमांसानामके ग्रन्थेऽज्ञातकर्तृकानि द्व्यधिकशत (१०२) सूत्राणि, भारतधर्ममहामण्डलतो मुद्रिते दैवीमीमांसादर्शने (१४२) सूत्राणि सत्यनारायणशर्मणो भक्तिसूत्रं च भगवद्भक्तानां हृदयान्यावर्जयन्ति।

एतद्भगवद्भक्तिसूत्रातिरिक्ता अनेकैर्भक्तशिरोमणिभिर्विद्वन्मणिभिर्विषयममधिकृत्य समये—समयेऽनेके ग्रन्थाः प्रणीताः, विविधा निबन्धाश्च लिखिताः। यत्रैतेऽतिप्रसिद्धा, प्रमाणिकाश्च सन्ति।

१. श्रीमधुसूदनसरस्वतीस्वामिनाम् — भक्तिरसायनम्।
२. श्रीस्वामिनारायणतीर्थानाम् — भक्त्यधिकरणमाला।
३. श्री नृसिंहभारतीमहोदयानाम् — भक्तिसुधातरङ्गिणी।
४. श्रीहरिहरानन्दसरस्वतीनाम् — भक्तिसुधा।

५. श्रीरुपगोस्वामिनाम् — (क) भक्तिरसामृतसिन्धुः।
(ख) उज्ज्वलनीलमणिः।
(ग) दानकेलिकौमुदी च।
६. श्री जीवगोस्वामिनः — वैष्णवतोषिणी।
७. श्रीगीतास्वामिविजयस्य — नवभक्तिरसायनम्।
८. श्री वोपदेवस्य — मुक्ताफलम्।
९. श्री रघुनाथशास्त्रिणः — भक्तितरङ्गिणी।
१०. श्री अनन्तदेवस्य — भक्तिनिर्णयः।
११. श्री सुरेश्वरमिश्रस्य — भक्तिकुसुमाञ्जलिः।
१२. श्री नारायणभद्रस्य — भक्तिसागरः।
१३. श्री जीवगोस्वामिनः — षट्सन्दर्भः।
१४. श्री रसिकोत्तंस्य — प्रेमपत्तनम्।
१५. श्री विठ्ठलेशस्य — भक्तिहंसः।
१६. श्री लक्ष्मीधरस्य — भगवन्नामकौमुदी।

## भक्तिरससमीक्षा -

पुण्यस्थलीभारतभूमिर्हि सरसस्य भक्तिरसस्य स्निग्धया धारया सिक्ता आप्यायिता च वर्तते। भारते भक्तिरसस्य प्रवाहोऽनादिकालत् एव प्रचलन्नास्ते। स्निग्धाऽनुरागसम्बन्धा भावप्रवणा भक्तिरसप्लाविता बह्वो विद्वांसः सन्तो महात्मानश्चानायासेन परमात्मानमवाप्य कृतकृत्यतामगुः यान्ति यास्यन्ति च।

यद्यपि रसविषयकचिन्तनपरम्पराया उदयस्तु बहुपूर्वत एव जात आसीत्। परन्तूपलब्धसामग्रीप्रामाण्यात् तस्य प्रवर्तनं भरतमुनित एव मन्यते रसज्ञैः। भारते भरतेन मुनिना रसनिष्पत्तिं सूत्ररुपेण निर्दिशता तत्र घनकारसन्यायेन दृष्टान्तमुपस्थाप्यात्मसन्तोषो

